वा अयं पवत एषोऽच्छिद्रं पवित्रमिति श्रुते. ( १, १, ३, ६ ) । 'सूर्य्यस्य रश्मिभिः' शुद्धिहेतुभिरुत्पुनामीति सम्बन्धः । वायोः सूर्य्यरश्मीनाञ्च पादप्रक्षालनाद्युपहतभूमिशुद्धिहेतुत्वं प्रसिद्धम् । का० ( २, ३, ३५ ) सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इतीति । उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चारयन् दक्षिणहस्तेनोर्ध्वञ्चालयेदिति सूत्रार्थः । मन्त्रार्थस्तु—हे 'देवाः आप.' द्योतनात्मिका आपो यूयम् 'अद्य' अस्मिन् दिने 'इमम्' इदानीं प्रवर्त्तमानं यज्ञम् 'अग्रे' 'नयत' पुरतः प्रवर्त्तयत निर्विघ्नं समापयत । किम्भूताः आपः अग्रेगुवः' अग्रे गच्छन्ति इत्यग्रेगुवः पुरतो निम्नदेशं प्रति गमनशीलाः । तथा 'अग्रेपुवः' अग्रे पुनन्ति अग्रेपुव. अग्रे यस्मिन् पूर्वभागे गच्छन्ति तस्मिन्नपहतिनिवारणेन शोधनशीलाः । यद्वा अग्रे पिबन्तीत्यग्रेपुवः । प्रथमं सोमरसस्य पानकर्त्र्यः । गमेः क्विप्प्रत्यये गमः क्वावित्यनुनासिकलोपे पुनातेः पिबतेर्वा क्वौ ऊङ् च गमादीनामित्यूकारः । किञ्च "यज्ञपति' यजमानमग्रे नयतेत्यनुवर्त्तते । फलभोगाय प्रेरयत । कथम्भूतम् 'सुधातुम्' सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुस्तं यज्ञस्य पतिं पालयितारम् । एको यज्ञपतिशब्दो योगेन व्याख्येय एको रूढ्या । तथा "देवयुवम्" । यु मिश्रणे । देवान् यौति यज्ञादिना मिश्रीकरोति देवयुस्तम् । क्विप् । अनित्यमागमशासनमिति तुगभावः । यद्वा देवान् कामयते इति देवयुस्तम् । 'इदयुरिद् कामयमान इति यास्कोक्तेः ( निरु० ६, ३१ ] सुप आत्मन. क्यजिति क्यच् क्याचि चेतीत्वे प्राप्ते न छन्दस्यपुत्रस्येतीत्वाभावः । अश्वाघस्यादिति अश्वाघयोरेवात्वविधानादकृत्सार्वधातुकयोरिति प्राप्तो दीर्घो न भवति । तत. क्याच्छन्दसीति उप्रत्ययः । देवयुशब्दस्यामि परेऽमि पूर्वं इति प्राप्तस्य पूर्वरूपस्य वा छन्दसीति विकल्पेन तन्वादीनां वा इयङुवङाविति उवङ् ॥ १२ ॥

युष्मा । इन्द्रो ऽवृणीत वृत्रतूर्य्यें यूयमिन्द्रमवृणीध्वं वृत्र तूर्य्यें प्रोक्षिता स्थ । अग्नये त्वा जुष्टं प्रोक्षामि । अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि । दैव्याय कर्मणे

**शुन्धध्वं देवयुज्यायै॑ यद्वोऽशु॑द्धाः परा॑जघ्नुरि॒दं व॒स्तच्छु॑न्धामि ॥ १३ ॥**

"युष्माइन्द्रोवृणीतवृत्रतूर्ये" । युष्मान् इन्द्रः साहाय्यार्थमवृणीत । किम्पुरस्कृत्य वृत्रतूर्ये तूर्यतिर्वधकर्मा वृत्रवधाय । "यूयं" च "इन्द्रमवृणीध्वं" वृतवत्यः वृत्रतूर्ये तस्मिन्नेवावसरे अतिमनुष्यतया । "प्रोक्षिताः स्थे"ति तासां प्रोक्षणम् । प्रोक्षिता यूयं तावद्भवथ । नह्यसंस्कृता अन्यसंस्कारक्षमा इति निह्नवः । हविः प्रोक्षति । "अग्नयेत्वा जुष्टम्" । अभिरुचितम् । अग्निशब्दस्य रुच्यर्थानां प्रीयमाण इति चतुर्थी । अग्नीषोमाभ्यामित्युक्तम् । पात्राणि प्रोक्षति । "दैव्याय कर्मणे" देवसंबन्धिने कर्मणे । तादर्थ्ये चतुर्थी । 'शुन्धयध्वम्' । शुध्यध्वमिति कर्मणि यकि प्राप्ते विकरणव्यत्ययः । "देवयज्यायै" । देवयागाय । एताभिरद्भिः शुन्धध्वमितिसंबन्धः । "किञ्च यद्वोऽशुद्धाः पराजघ्नुः" । यद्वः युष्माकं त्वशुद्धाः भक्षप्रभृतयः पराजघ्नुः पराहतवन्तः । इदमिति प्रत्यक्षनिर्देशः । वः युष्माकं तत् शुन्धामि शोधयामि अपनयामि ॥ १३ ॥

हे आपः ! 'इन्द्रः' देव. 'वृत्रतूर्य्ये' तूर्य्यतिर्वधकर्म्मा । वृत्रवधनिमित्तभूते सति 'युष्माः' युष्मान् 'अवृणीत' । आकारश्छान्दसः । सहकारित्वेन प्रार्थितवान् । 'यूयम्' अपि 'वृत्रतूर्य्ये' निमित्ते तम् 'इन्द्रम्' 'अवृणीध्वं' वृतवत्यः सहकारित्वेन । का० ( २, ३, ३६ ) प्रोक्षिता स्थेति तासां प्रोक्षणमिति । हे आपः ! यूयं 'प्रोक्षिता.' भवथ । असंस्कृता अन्यसंस्कारक्षमा न भवन्तीति । का० ( २, ३, ३७, ३८ ) 'हविश्चाग्नये त्वाग्नीषोमाभ्यां त्वेति यथा देवतमन्यदिति । अन्यदपि हविस्तद्देवतोच्चारेण प्रोक्षणीयम् । अग्नये त्वां जुष्टं प्रोक्षामि । अग्नीषोमाभ्यां जुष्टं त्वां प्रोक्षामि । का० ( २, ३,

३९.) पात्राणि दैव्यायेति । कृष्णाजिनोलूखलादीनि पात्राणि प्रोक्षयेत् । हे यज्ञपात्राणि ! यूय 'शुन्धध्वम्' शुद्धानि भवत । किमर्थम् 'दैव्याय कर्मणे' अग्न्यादिदेवतासम्बन्धिने कर्मणे । तदेव कर्म विशिष्यते । 'देवयज्याये' देवसम्बन्धिन्यै यागक्रियायै दर्शादिकायै । किञ्च । 'अशुद्धाः' नीचजातयस्तक्षादयः 'व.' युष्माकं सम्बान्धि यदङ्गं 'पराजघ्नुः' पराहतं कृतवन्तः । छेदनतक्षणादिकाले स्वकीयहस्तस्पर्शरूपमशुचित्वं चक्रुः । 'तदिदं' 'वः' युष्माकमङ्गं 'शुन्धामि' प्रोक्षणेन शुद्धं करोमि ॥ १३ ॥

**शर्मासि । अवधूतꣳरक्षोऽवधूता अरातयः । अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । अद्रिरसि वानस्पत्यः । ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु ॥ १४ ॥**

कृष्णाजिनमादत्ते । "शर्मासि" । चर्मासीति प्राप्ते चकारस्य शकारः । "शर्म देवत्रेति" श्रुतिः । अवधुनोति । "अवधूतं रक्षः" । धूञ् कम्पने अवकम्पितं रक्षः अवकम्पिताश्च अरातयः अदानशीलाः पुरुषाः । न ह्येतद् यज्ञसाधनमित्यपन्हवः । कृष्णाजिनमास्तृणाति । "आदित्यास्त्वगसि" । अदित्याः पृथिव्यास्त्वं त्वग्भवसि । अतः "प्रतिवेत्तु" । विद् ज्ञाने । प्रतिजानातु त्वाम् अदितिः पृथिवी । "प्रतिहि स्वः संजानीत" इति श्रुतिः । तस्मिन्निदधात्युलूखलम् । "अद्रिरासि" । आ दृणाति विदारयति आदृणात्यनेन व्रीह्यादिकमित्यद्रिः । त्वं भवसि । "वानस्पत्य"श्च । वनस्पतेर्विकारो वानस्पत्यः । अनेन वा निदधाति । "ग्रावासि" । हन्ति व्रीह्यादिकमनेनेति ग्रावा त्वमासि । "पृथुबुध्नः" । बृहन्मूलः । अतः "प्रति त्वादित्यास्त्वग्वेत्तु" । प्रतिवेत्तु त्वामुलूखल अदित्यास्त्वक् कृष्णाजिनम् । कथम्

अहं च पृथिव्यास्त्वक् अयं चोलूखलः पृथिव्यास्त्वगिति । त्वगेवात्मनात्मानं हिनस्ति ॥ १४ ॥

का० [ २, ४, १ ) शर्मासीति कृष्णाजिनादानमिति । हे कृष्णाजिन! त्वमुलूखलस्य धारणार्थं 'शर्म' सुखहेतुरसि । आजिनस्य चर्मेति मानुषं नाम शर्मेति दैवं नाम । का० [ २, २, २ ] अपेत्य पांशुभ्योऽवधूनोत्यवधूतामितीति । 'रक्षः' कृष्णाजिने गूढम् 'अवधूतम्' । कृष्णाजिनकम्पनेन भूमौ पातितम् एवमरातयोऽपि पातिताः । का० ( २, ४, ३० ) प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगितीति । हे कृष्णाजिन ! त्वम् 'अदित्याः' भूमिदेवतायास्त्वग्रूपम् असि । ततोऽदितिर्भूमिस्त्वा त्वां प्रति वेत्तु प्रतिगृह्य मदीयेयं त्वगिति वेत्तु जानातु । पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वागमत्तदा देवा ज्ञात्वा तदीयां त्वचमुत्क्षिप्य जगृहुस्तस्माच्चर्मास्तरणमित्यभिप्रायः श्रुतावाम्नातः ( १, १, ४, १, ) । का० ( २, ४, ४, ५ ) सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा प्रति त्वेत्युभयोरिति । विकल्पितयोर्मन्त्रयोः प्रति त्वेति शेषो योजनीयः । हे उलूखल ! त्वं यद्यपि 'वानस्पत्यः' दारुमयस्तथापि दृढत्वात् 'अद्रिरसि' पाषाणोऽसि । किम्भूतः 'पृथुबुध्नः' स्थूलमूलः । मूसलघातोपद्रवेण चाञ्चल्यराहित्याय मूलस्थूलत्वम् । हे उलूखल ! तथाविधस्त्वं 'ग्रावासि' दार्ढ्येन पाषाणसदृशोऽसि । 'अदित्यास्त्वक्' अधस्तादास्तीर्णा कृष्णाजिनरूपा भूमेर्या त्वगस्ति सा त्वां 'प्रति वेत्तु' स्वकीयत्वेन जानातु ॥ १४ ॥

अ॒ग्नेस्त॒नूर॑सि वा॒चो वि॒सर्ज॑नं दे॒ववी॑तये त्वा गृह्णामि । बृ॒हद्ग्रा॑वासि वानस्प॒त्यः । स इ॒दं दे॒वेभ्यो॑ ह॒विः श॑मीष्व सु॒शमि॑ शमीष्व । हवि॑ष्कृ॒देहि॑ हवि॑ष्कृ॒देहि॑ हवि॑ष्कृ॒देहि॑ ॥ १५ ॥

हविरावपति । "अग्नेस्तनूरसि" । आहवनीयोऽत्राग्निरुच्यते । तत्र हविः प्रक्षिप्तमग्निर्भवति । अत एवमुच्यते अग्नेस्तनुः शरीरमसीति । अथवा अग्निशब्देन यस्यै देव-

तायै हविर्गृह्यते सा लक्ष्यते । तस्या अपि हविस्तनूर्भवतीति । "वाचो विसर्जनम्" । वाक् यस्मिन्हविषि प्रक्षिप्ते विसृज्यतेऽध्वर्युणा तदिदं वाचो विसर्जनम् । "देववीतये" । देवतर्पणाय "त्वा गृह्णामि" । आवपामीत्यर्थः । मुसलमादत्ते "बृहद्ग्रावासि" । दीर्घत्वापेक्षं बृहत्त्वं, हन्त्यपेक्षं ग्रावत्वम् । दीर्घग्रावा त्वमासि । "वानस्पत्यः" वनस्पतेर्विकारश्च वानस्पत्यः । स इदमित्यवदधाति । स"त्वमिदं"देवेभ्योऽर्थाय "हविः शमीष्व" । शम्यतिः संस्कारार्थः । "सुशमि" क्रियाविशेषणमेतत् । साधु यथा संस्कृतं भवति तथा शमीष्वेति । हविष्कृदेहीति त्रिराह्वयति । हविष्करोतीति "हविष्कृत्" । "एहि" आगच्छ । अधिदैवं वागुच्यते । अधियज्ञं पत्नी ॥ १५ ॥

का० ( २, ४, ६, ) हविरावपत्यग्नेस्तनूरसीतीति । हे हविः ! त्वं 'अग्नेः' आहवनीयस्य 'तनूः' शरीरमसि । यतस्तत्र क्षिप्तं हविरग्नीभवति । अतो हविः अग्नेस्तनूः । किम्भूतं हविः । 'वाचो विसर्जनम्' अपां प्रणयनकाले नियमिताया यजमानवाचो हविरावपनकाले विसर्गो भवति । तस्मादिदं हविर्वाचो विसर्जनम् । अतः 'देववीतये' देवानां तर्पणाय 'त्वा' त्वां 'गृह्णामि' आवपामीत्यर्थः । का० ( २, ४, ११ ) बृहद्ग्रावेति मुसलमादत्त इति । हे मुसल ! त्वं यद्यपि 'वानस्पत्यः' दारुमयस्तथापि 'ग्रावासि' दार्ढ्येन पाषाण सदृशोऽसि । तथा दीर्घत्वेन बृहन्महानसि । का० ( २, ४, १२ ) स इदमित्यवदधातीति । हे मुसल ! त्वं 'देवेभ्यः' अग्न्यादिदेवोपकारार्थम् 'इदं' हविर्व्रीहिरूपं 'शमीष्व' शमय । भक्षणविरोधितुषापनयनेन शान्तं कुरु । तस्यैव पदस्य व्याख्यानम् । 'सुशमि शमीष्व' सुष्ठु शान्तं यथा भवति तथा शमीष्व शमय । शमु उपशमे व्यत्ययेन शपो लुक् । तुरुस्तुशम्यमः सार्वधातुक इति ईडागमः शान्तिर्द्विविधा । बाह्यतुषापनयनादाद्या । सा प्रथमावघातेन स्यात् । अन्तःस्थितमालिन्यस्यापनयनादन्या । सा फलीकरणे

न भवति। तद्विविधं तण्डुलसंस्कारं कुर्वित्यर्थः। का० (२, ४, १३) हविष्कृदेहीति त्रिराह्वयतीति। यजमानः पत्नी वान्यो वा यो व्रीहीनवहन्ति स सम्बोध्याहूयते। हे 'हविष्कृत्' हविः करोतीति हविष्कृत् 'एहि' अत्रागच्छ। त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराह्वानम्॥ १५॥

**कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयं संघातं संघातं जेष्म। वर्षवृद्धमसि। प्रति त्वा वर्षवृद्धं वेत्तु। परापूतं रक्षः परापूता अरातयः। अपहतं रक्षः। वायुर्वो विविनक्तु। देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना॥ १६॥**

आहन्ति अन्यो दृषदुपले। "कुक्कुटोसि"। अत्र मनोर्ह वा ऋषभ आसेत्यादीतिहास उत्प्रेक्षितव्यः। कुत्सितं शब्दमसुरघ्नमसुराणां तनोतीति कुक्कुटः। अथवा असुरघ्नीं वाचमुपादाय क क अमुग एवं योऽटति असौ कुक्कुटः। अस्मिन्पक्षे कशब्दस्य संप्रसारणमटतेश्चाकारस्य 'संप्रसारणाच्चे'ति पूर्वरूपत्वम्। कुक्कुटस्त्वमस्यसुराणां, देवानां "मधुजिह्वः"। अन "इषं" व्रीहिम् "ऊर्ज्ज" मन्नं च "आवद" आभिमुख्येन वद। त्वया च सहायभूतेन "वयं संघातम्"। संपूर्वस्य हन्तेः संघातेन संग्रामः समुदायो वाभिधेयः। वीप्सार्थं द्विर्वचनम्। संग्रामं संग्रामं जेष्म। शूर्पमादत्ते। "वर्षवृद्धम्"। वृष्ट्या वृद्धं त्वमसि। हविरुद्वपति। "प्रति त्वा वर्षवृद्धं वेत्तु'। प्रतिवेत्तु प्रतिजानातु त्वा वृष्ट्या वृद्धं हे हविः। समानजन्मत्वाद्धविःशूर्पयोर्भ्रातृत्वार्थं वचनम्। निष्पुनाति। " परापूतं रक्षः"। पराक्षिप्तं रक्षः। "परापूताः" पराक्षिप्ताश्च"रातयः" अदानशीलाः पुरुषाः। तुषान्निरस्यति। "अपहतम्"। हन्तिर्गत्यर्थः। अपगतं

रक्षः । विविनक्ति । "वायुर्वः" । तण्डुला उच्यन्ते । वायुः वः युष्मान्विविनक्तु पृथक्करोतु व्रीहिभ्यः सकाशात् । पात्र्यामोप्याभिमन्त्रयते । "देवोवः सविता" । वो युष्मान् हे तण्डुलाः । "हिरण्यपाणिः" । "तत्सवित्रे प्राशित्रं परिजह्रुः । तस्य पाणी परिचिच्छेद । तस्मै हिरण्मयौ प्रतिदधुः तस्माद्धिरण्यपाणिरित्युच्यते" इति बह्वृचानां श्रुतिः । "प्रतिगृभ्णातु"प्रतिग्रहं करोतु । "अच्छिद्रेणा"शिथिलेन हस्तेन ॥१६॥

का० ( २, ४, १५ ) आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिः शम्यया द्विर्दृषदं सकृदुपलमिति । हे शम्यारूप ! यज्ञायुधविशेष!त्वं 'कुक्कुटोऽसि' असुराणां "मधुजिह्वः" चासिदेवानाम् । असुराः क केति तान् हन्तुमिच्छन् योऽटति सर्वत्र सञ्चरति स कुक्कुटः । यद्वा कुकं कुत्सितशब्दं कुटति तनोतीति कुक्कुटः । यद्वा कुक्कुटाख्यपक्षिवत् ध्वनिविशेषमसुरभीत्यर्थंतनोतीति कुक्कुट इत्युपचर्य्यते । मधुजिह्वकनामा कश्चिद्देवानां भृत्यः । मधुर्मधुरभाषिणी जिह्वा यस्य तद्रूप हे यज्ञायुध ! त्वमसुरान् पराभवन् यजमानस्य 'इषमूर्जञ्चावद' । अन्न रसञ्च यथा समागच्छति तथा शब्दं कुरु । तव शब्देनासुरेषु पराभूतेषु तदीयमन्नं रसञ्च यजमानः प्राप्नोति । ततः 'त्वया' कृत्वा 'वयं सङ्घातं सङ्घातं 'जेष्म' असुरैः सह क्रियमाणं तं तं संग्रामं जेष्म जयेम । कदाचिदपि पराजयोऽस्माकं मास्त्वित्यर्थः । सम्यक् हन्यन्ते असुरा यत्रेति सङ्घातो युद्धम् । मनो राज्ञ एकोवृषभ आसीत्तस्मिन्नसुरघ्नी वाक् स्थिता तस्मिन् शब्दं कुर्वति तं श्रुत्वैवासुरा म्रियन्ते । ततः किलाताकुलीनामानावसुरयाजकौ मनु गत्वा तेनैव ऋषभेणायाजयतामृषभे हते सा वाङ्मनोर्जायां प्रविष्टा । तौ पुनस्तयापि मनुमयाजयताम् । ततः सा वाग्यज्ञपात्राणि प्रविष्टेत्यसुरपराभवाय तद्वाक्प्रकटनार्थं शम्यया दृषदुपलहननमिति श्रुत्योक्तोऽभिप्रायः ( १, १, ४, १४ ) का० ( २, ४, १६ ) वर्षवृद्धमसीति शूर्पमादत्त इति । हे शूर्प ! त्वं वर्षवृद्धमसि वर्षेणवृष्टया तद्भूतजलेन वृद्धं वर्षवृद्धम् । वर्षवृद्धवेणुशलाकानिर्मितत्वात् शूर्पस्य वर्षवृद्धत्वम् । का० [ २, ४, १७ ] प्रति त्वेति हवि-

कल्पयतीति । हे हविः । 'वर्षवृद्धं' शूर्पं 'त्वा' त्वां 'प्रतिवेत्तु' स्वकीयत्वेन जानातु व्रीहिशूर्पयोर्वर्षवृद्धत्वाद् भ्रातृत्वम् । का० (२, ४,१८) परापूतमिति निष्पुनातीति । 'रक्षः' 'परापूतं निराकृतं शूर्पेण तुषेषु परापूतेषु तद्गतं रक्षोऽपि तैः सह भूमौ पातितम् । 'अरातयः' हविः प्रतिकूला आलस्यादिशत्रवश्च "परापूताः" निराकृताः । का० ( २, ४, १९ ) अपहतमिति तुषान्निरस्यतीति । 'रक्षः' 'अपहतं" दूरेऽपनीय मारितम् । भूमौपातितान् दूरे निः सारयेत् । का० ( २, ४, २०) वायुर्व इति विविनक्तीति । हे तण्डुलाः ! 'वायुः' सूर्पचालनोत्थः 'वः युष्मान् 'विविनक्तु' सूक्ष्मकणेभ्यः पृथक्करोतु । का० ( २, ४, २१ ) देवो व इति पात्र्यामोप्याभिमन्त्रयते इति । हे तण्डुलाः ! 'सविता देवः' 'वः' युष्मान् 'अच्छिद्रेण पाणिना' अङ्गुलिविश्लेषहीनेन स्वहस्तेन प्रतिगृभ्णातु' स्वीकरोतु । हग्रहोर्भश्छन्दसीति हस्य भः पात्रीप्रक्षेपसमये भूमौ पतनं मा भूदिति सवितुर्ग्रहणं प्रार्थ्यते । किम्भूत सविता 'हिरण्यपाणिः' हिरण्ययुक्तावङ्गुलीयाद्याभरणयुक्तौ पाणी यस्य स हिरण्यपाणिः । यद्वा दैत्यैः प्राशित्रप्रहारेण छिन्नौ सवितुः पाणी देवैर्हिरण्मयौ कृताविति सवितुर्हिरण्यपाणित्वमिति बह्वृचश्रुतौ कथा ॥ १६ ॥

धृष्टि॑रसि । अपा॑ग्ने अ॒ग्निमा॒मादं॑ जहि॒ निष्क्र॒व्यादं॑ सेध । आ दे॑व॒यजं॑ वह । ध्रुव म॑सि पृथि॒वीं दृ॑ꣳह ब्रह्म॒वनि॑ त्वा क्षत्र॒ वनि॑ सजा॒तवन्युप॑दधामि॒ भ्रातृ॑व्यस्य व॒धाय॑ ॥ १७ ॥

उपवेषमादत्ते । "धृष्टिरसि" । ञिधृषा प्रागल्भ्ये । अनेनाग्निर्धृष्टमुपचरतीति धृष्टिः उपवेष उच्यते । धृष्टिस्त्वमस्युपवेष । अङ्गारान्प्राञ्चः करोति । "अपाग्ने अग्निमामादं जहि" । अपजहि परित्यज । हे भगवन्नग्ने अग्निमामादम् आममत्तीत्यामात् तम् येनेदं मनुष्या अपकमन्नमश्नन्ति स उच्यते । जहातिस्त्यागार्थः । "निष्क्रव्यादं"सेध । निःसेध क्रव्यादमग्निम् । येन पुरुषं दहन्ति स क्रव्यात् । सेधतिरपि त्यागार्थः ।

अङ्गारमाहरति । "आदेवयजं वह" आवह देवयजमग्निम् । देवा यस्मिन्निज्यन्ते स देवयट् तं देवयजमग्निम् । कपालेनावच्छादयति । "ध्रुवमसि पृथिवीं दृꣳह" । त्रिभिः कपालैस्त्रीँल्लोकान्यजमानो जयति चतुर्थेन दिशः । यश्चैषु संस्कृतेषु पुरोडाशः सोप्याधारवशात्त्रिलोकविग्रह एव भूत्वा देवान्प्रीणातीति प्रकरणार्थः । "यद्व वा आत्मसंमितमन्नं तदवति तन्न हिनस्तीति" श्रुतिः "ध्रुवमसि" । ध्रुवं स्थिरं त्वमसि । अतः पृथिवीं दृꣳह । दृढीकुरु । न हि स्वयमप्रतिष्ठितोऽन्यस्य प्रतिष्ठां कर्तुं समर्थः । किञ्च इत्थं भूतं त्वामुपदधामि । "ब्रह्मवनित्त्वा" ब्रह्मयद्वनोति सम्भजति संश्रयते तत्कपालं ब्रह्मवनि । एवं क्षत्रवनि । सजातवनि समानं जाताः सजाता भ्रातृप्रभृतय उच्यन्ते । भ्रातु 'र्व्यन्सपत्ने' इति आद्युदात्तत्वाद्भ्रातृव्यशब्दने शत्रुरभिधेयः । शत्रोश्च वधाय त्वामुपदधामीत्यनुषङ्गः ॥ १७ ॥

का० मूलतः शाखां परिवास्योपवेषं करोतीति । ( २, ४, २६ ) धृष्टिरसीत्युपवेषमादायेति । च । पलाशशाखाया मूलदेशे छिन्नः काष्ठभाग उपवेषस्तमादत्ते । हे उपवेष ! त्वम् 'धृष्टिरसि' प्रगल्भोऽसि' ञिधृषा प्रागल्भ्ये । तीव्राङ्गाराणामितस्ततश्चालने प्रभुत्वादस्य प्रागल्भ्यम् । का० ( २, ४, २६ ) अपाग्न इत्यङ्गारान् प्राचः करोतीति । तत्र त्रयोऽग्नयः सन्ति । एकः आमात् । आममपक्वमत्तीत्यामाल्लौकिकोऽग्निः । द्वितीयः क्रव्यात् । शवदाहे क्रव्यं मांसमत्तीति क्रव्यात् चिताग्निः । तृतीयो यागयोग्यः । तथाविधान् त्रीनङ्गारान् गार्हपत्यात्प्राग्भागे पृथक्कृत्य तेषां मध्ये यागयोग्यताहीनौ द्वावग्नी आमात् क्रव्यात्संज्ञौ तौ वारयितुं गार्हपत्यं प्रत्युच्यते । हे 'अग्ने' ! हे गार्हपत्य ! 'आमादमग्निम्' 'अपजहि' परित्यज । व्यवहिताश्चेति क्रियापदोपसर्गयोर्व्यवधानम् । तथा 'क्रव्यादम्' अग्निं 'निषेध' निःशेषं दूरे गमय परित्यजेत्यर्थः । का० ( २, ४, २७ ) आदेवयजमित्यङ्गारमाहृत्येति । हे गार्हपत्य ! 'देवयज' देवानां यागयोग्यं तृतीयमङ्गारम् 'आवह' समीपमानय । देवा इज्यन्ते यस्मि-

असौ देवयट् तं देवयजम्। का० (४, २, २७) कपालेनावच्छादयति ध्रुवमसीति। देवयजमङ्गारं कपालेनाच्छादयेत्। हे कपाल! त्व 'ध्रुवमसि' स्थिरं भवसि। अङ्गारोपरिवर्त्तमानमपि इतस्ततो न पतसि। 'पृथिवीं' भूमिं 'दृंह' दृढीकुरु। पुरोडाशपाकसमये त्वत्कृतव्यवधानेन भूमेर्दाहकृतं शैथिल्यं न भविष्यतीत्यर्थः। किञ्च 'त्वाम्' 'उपदधामि' अङ्गारे स्थापयामि। किमर्थं 'भ्रातृव्यस्य' शत्रोरसुरस्य पाप्मनो वा 'वधाय' हिंसार्थम्। व्यन् सपत्ने इत्याद्युदात्तत्वात् भ्रातृव्यशब्दः शत्रुवाची। किम्भूतं त्वां ब्रह्मवनि'। वन षण सम्भक्तौ ब्रह्मणा ब्राह्मणेन वन्यते पुरोडाशनिष्पत्यर्थं स्वीक्रियते इति ब्रह्मवनि। तथा 'क्षत्रवनि' सजातवनीति पदद्वयं योज्यम्। सजाताः समानकुले जाताः यजमानस्य ज्ञातयस्तैर्वन्यते इति ॥ १७ ॥

अग्ने ब्रह्म गृभ्णीष्व। धरुणमस्यन्तरिक्षं दृंह ब्रह्म वनिं त्वा क्षत्रवनिं सजातवन्युपदधामि भ्रातृव्यस्य वधाय। धर्त्रमसि दिवं दृंह ब्रह्म वनिं त्वा क्षत्रवनिं सजातवन्युपदधामि भ्रातृव्यस्य वधाय। विश्वाभ्यस्त्वाशाभ्य उपदधामि। चित स्थोर्ध्वचितः। भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥ १८ ॥

सव्याङ्गुल्या शून्येऽङ्गारं निदधाति। "अग्ने ब्रह्म"। हे भगवन्नग्ने ब्रह्म ब्राह्मणमङ्गुलिप्रदानेन व्यावृत्तमनुगृह्णीष्व अनुग्रहं कुर्वित्यर्थः। द्वितीयं निदधाति। "धरुणमि"ति साधारणं धारकमसि। 'अन्तरिक्षं दृंह'। शेषं पूर्ववत्। तृतीयं निदधाति। "धर्त्रमसि"। धारयितृ असि। "दिवं दृंह"। चतुर्थं निदधाति। "विश्वाभ्यस्त्वा" सर्वाभ्य "आशाभ्यो" दिग्भ्य "उपदधामि"। इतराणि कपालान्युपदधाति। "चितस्थ"। चिञ् चयने। किबन्तस्य रूपमिदं बहुवचनं च पूर्वोपहितकपालविषयम्। चितानि यूयं भवथ।

"ऊर्ध्वचितः" पश्चादुपहितकपालेषु चित इति उर्ध्वचित् तस्योर्ध्वचितः उपचीयमानस्येति शेषः । अङ्गारैरभ्यूहति । "भृगूणामङ्गिरसाम्" । भृगोरपत्यानि बहूनि भृगवः तथा आङ्गिरसः 'तद्राजस्य बहुषु' लुक् । भृगूणामङ्गिरसां च तपसा यूयं कपालानि तप्यध्वम् ॥ १८ ॥

का० ( २, ४, ३० ) सव्याङ्गुल्या शून्येऽङ्गारं निदधात्यग्ने ब्रह्मेतीति । हे 'अग्ने' निधीयमानाङ्गाररूपं 'ब्रह्म' प्रौढ कर्मास्माभि· क्रियमाणं 'गृभ्णीष्व' गृह्णीष्व । नाशकरक्षोवधेनानुगृह्णीष्व । यद्वा-ब्राह्मणं मामनुगृह्णीष्व । अङ्गुलीदानासक्तं मा दंहेत्यर्थः । का० (२, ४, ३१ ) धरुणमिति पश्चादिति । पूर्वस्थापितकपालस्य पश्चाद्भागे द्वितीय निदधाति । हे द्वितीय कपाल ! त्व 'धरुण' पुरोडाशस्य धारकम् 'असि' अतोऽन्तरिक्ष 'दृंह' दृढीकुरु । पुरोडाशपाकोत्पन्नज्वालयान्तरिक्षलोकोपद्रवो यथा न स्यात् तथा कुरु । यद्यप्येतत् कपालं ज्वालान्तरिक्षयोर्मध्ये व्यवधायक नास्ति तथाप्यन्तरिक्षदार्ढ्याय कपालदेवता प्रार्थ्यते । ब्रह्मवनीत्यादि पूर्वत् का० ( २, ४, ३२ ) पुरस्ताद्धर्त्रमितीति । प्रथमस्य पूर्वभागे तृतीयं स्थापयेत् । हे कपाल ! त्व 'धर्त्रं' धारकम् 'असि' । 'दिवं' दृंह । ज्वालाग्रेण दाहाभावो द्युलोकस्य दार्ढ्यम् । अन्यत् पूर्ववत् । का० ( २, ४, ३३ ) विश्वाभ्य इति । दक्षिणत इति । हे चतुर्थ कपाल ! 'विश्वाभ्यः आशाभ्यः' सर्वदिग्भ्यः सर्वदिग्दार्ढ्याय 'त्वा' 'उपदधामि' । एवं कपालत्रयोपधानेन यजमानो लोकत्रयं जयति । चतुर्थेन दिशो जयति । तद्वत पुरोडाशो लोकत्रयरूपो भूत्वा देवता· प्रीणातीत्याशयः । का० [ २,४, ३४ ] समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चित स्थेतीति । आग्नेयपुरोडाशस्याष्टकपालत्वाच्चतुर्णां स्थापितत्वादवशिष्टानां चतुर्णां मध्ये द्वे द्वे दक्षिणोत्तरयोर्निदध्यात् । चिञ् चयने क्विबन्तस्य चित इति बहुवचनम् । हे कपालविशेषाः ! यूयं 'चितः स्थ' प्रथमकपालोपचयकारिणः स्थ भवथ । तथा ऊर्ध्वचितः स्थ ऊर्ध्वमुपहितानां द्वितीयादिकपालानामुपकारिणो भवथ । का० [ २, ४, ३८ ] भृगूणामित्यङ्गारैरभ्यूहतीति । अङ्गारैः कपालानि छादयेत् । हे कपा-

लानि ! यूयं 'भृगूणामङ्गिरसां' भृगूनामकानामङ्गिरोनामकानां देवर्षीणां तपसा तपोरूपेणाग्निनानेन 'तप्यध्वम्' तप्तानि भवत । अस्याग्नेस्तदीयरूपत्वं भावयेदित्यर्थः ॥ १८ ॥

**शर्मासि । अवधूतꣳ रक्षोऽवधूता अरातयः । अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु । दिवः स्कम्भनीरसि । धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥ १९ ॥**

शर्मासीत्यादि त्रीणि यजूंषि व्याख्यातानि । कृष्णाजिने दृषदं निदधाति । "धिषणासि" । धीः कर्म बुद्धिर्वा तदुभयं सीदति सनोति व्याप्नोति ददाति वा कर्माङ्गत्वात् दृषद् धिषणोच्यते । धिषणे त्वमसि "पर्वती" पर्ववती । अतः "प्रतिवेत्तु" प्रतिजानातु "त्वामदित्यास्त्वक्" पृथिव्यास्त्वक् । कृष्णाजिने शम्यामुपदधाति । "दिवस्कम्भनीरसि" । दिवो द्यावापृथिव्योः दृषदुलूखलयोः पृथिवी । द्युभ्यामुपलक्षितत्वात् शम्याया अन्तरिक्षभक्तित्वमुपपद्यते । दिवो द्यावापृथिव्योः "स्कम्भनीः" स्कभ्नोतिः संस्तम्भनकर्मा । संस्तम्भनीर्भवसि । "अन्तरिक्षमेव रूपेण हीमे द्यावापृथिवी विस्तब्धे" इति श्रुतिः । दृषद्युपलमुपदधाति । "धिषणासि" । व्याख्यातम् । "पार्वतेयी" । पर्वत्या अपत्यम् पार्वतेयी । "कनीयसी ह्येषा दुहिता पार्वतेयी भवती"तिश्रुतिः ॥ १९ ॥

का० ( २, ५, २ ) कृष्णाजिनमादत्ते पूर्ववदिति । यथावघातार्थे कृष्णाजिनप्रयोगस्तद्वदत्रापि । शर्मासि । अवधूतम् । 'अदित्याः' इति मन्त्रत्रयं व्याख्यातम् ॥ का० ( २, ५, ३ ) तस्मिन् दृषदं धिषणासीति । तस्मिंश्चर्मणि शिलां स्थापयेत् । हे शिले ! पेषणाधारभूते ! त्वं 'पर्वती' पर्वतात्मिका तदुत्पन्ना त्वं 'धिषणासि' धियं बुद्धिं कर्म वा सिनोति व्याप्नोति ददाति वा धिषणा । ह्रस्वत्वमार्षम् । पर्वतवत् धारयन्त्यसि । 'अदित्याः' भूमेः 'त्वक्' कृष्णा-

जिनरूपा तादृशीं 'त्वा' त्वां 'प्रति वेत्तु' त्वदवस्थानमनुजानातु । का० ( २, ५, ४ ) पश्चाच्छम्यामुपोहत्युदीचीं दिव इतीति । दृषदः पश्चाद्भागेऽधस्ताच्छम्यां स्थापयेत् । तां प्रत्युच्यते । हे शम्ये ! 'दिवः' द्युलोकस्य 'स्कम्भनीः' स्तम्भनकारिणी त्वम् 'असि' व्यत्ययेन द्वितीयाबहुवचनम् पतनवारणायान्तरिक्षरूपेण स्तम्भनकारित्वम् । अन्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे इति श्रुतेः [ १, २, १, १६ ] ॥ का० ( २, ५, ५, ] दृषदुपलां धिषणासीति । हे उपले ! उपरितनशिले । त्व 'धिषणासि' पेषणव्यापारधारिकासि । किम्भूता पार्वतेयी' पर्वत्या अधस्तनदृषदः पुत्री पार्वतेयी बालस्वरूपा । 'कनीयसी ह्येषा दुहितेव भवतीति श्रुतेः [ १, २, १, १७ ) अतः 'पर्वती' मातृसमा त्वां 'प्रतिवेत्तु' पुत्री जानातु ॥ १९ ॥

धा॒न्यमसि धिनु॒हि दे॒वान् । प्रा॒णाय॑ त्वा । उ॒दा॒नाय॑ त्वा । व्या॒नाय॑ त्वा । दी॒र्घामनु॒ प्रसि॑ति॒मायु॑षे धां दे॒वो वः॑ सवि॒ता हिर॑ण्यपाणिः॒ प्रति॑गृभ्ण॒ात्वच्छि॑द्रेण पा॒णिना॑ । चक्षु॑षे त्वा । म॒ही॒नां पयो॑ऽसि ॥ २० ॥

दृषदि तण्डुलानावपति । "धान्यमसि" । धिनोतेः प्रीणनार्थस्य धान्यमिति भवति । तदभिप्रायेणैवमाह । यतस्त्वमेवं स्वभावमसि अतः प्रीणीहि देवान् । पिनष्टि । "प्राणायत्वा" । अत्र श्रुतिः । "जीवं वै देवानां हविरमृतममृतानां" इत्युपक्रम्य "दृषदुपलाभ्यां हविर्यज्ञंघ्नन्ती"ति प्रतिपाद्य स यदाद "प्राणायत्वोदानायत्वेति तत्प्राणापानौ दधाती"त्येवमादिना ग्रन्थेन यथा हविषः पुनर्जीवनं क्रियते तथा श्रुतिः प्रतिपादयति । तदनुसारेण व्याख्यानं करिष्यामः । प्राणाय त्वा पिनष्मि" न तु हिंसायै । एवमुत्तरावपि मन्त्रौ व्याख्येयौ । कृष्णाजिने प्रक्षिपति । "दीर्घामनुप्रसितिम्" । षह मर्षणे । प्रसितिः प्रसवनात्तन्तुर्वा जालं वा । इह तु प्रसितिशब्देन कृष्णाजिनम-

भिधीयते, तदपि हि पिष्टानि गृह्णाति। दीर्घां कृष्णाजिनाख्यां प्रसितिमनु। "आयुषे" आयुर्दानाय त्वा "धां" दधामि। "देवो वः"। इति व्याख्यातम्। ईक्षते। "चक्षुषे त्वा" चक्षुर्दानाय त्वामहमीक्षे। "एतानि वै जीवतोभवत्येवमुपैतज्जीवमेव देवानां हविर्भवती"तिश्रुतिः। आज्यं निर्वपति। 'महीनां पयोसी"ति। महीति गोनाम। महीनां गवां पयो भवसि। पयश्शब्देन लक्षणया घृतमभिधीयते॥ २०॥

का० ( २, ५, ६, ) धान्यमसीति तण्डुलानोप्येति। हे हविः। त्व 'धान्यमसि'। धिनोति प्रीणातीति धान्यम। अतो 'देवान्' अग्न्यादीन् 'धिनुहि' प्रीणय। का० ( २, ५, ६ ) पिनष्टि प्राणाय त्वेति प्रतिमन्त्रमिति। प्रकर्षेण अनिति सर्वदा मुखे चेष्टत इति प्राणः श्वासवायुः। उदानिति ऊर्ध्वं चेष्टत इत्युदानः उत्क्रान्तिवायुः। व्यनिति व्याप्य चेष्टते इति व्यानो व्यापको बलहेतुर्वायुः। हे तण्डुल! 'त्वा' त्वां 'प्राणाय' प्राणदानार्थं पिनष्मीति शेषः। एवमुत्तरमन्त्रयोर्येऽयम। देवानां सजीव हविर्भवतीत्येभिर्मन्त्रैर्हविषां प्राणादिदानेन सजीवत्व क्रियत इत्यभिप्रायः॥ का० ( २, ५, ७ ] दीर्घामिति कृष्णाजिने प्रोहतीति। प्रसयनं प्रसितिः। षिञ् बन्धन प्रबन्धः कर्मसन्तति। दीर्घामविच्छिन्नां 'प्रसितिमनु कर्मसन्ततिमनुलक्ष्य 'आयुषे' यजमानस्यायुरभिवृद्ध्यर्थं हे हविः! त्वां 'धां' कृष्णाजिने दधामि। दधातेर्लुङि बहुल छन्दस्यमाङ्योगेऽपीति अडागमाभावः। यजमानस्यायुर्वृद्धौ सत्यां कर्मसन्ततिः प्रवर्त्तत इति भावः। यद्वायमर्थः। पूर्वमन्त्रैर्हविष प्राणादिदानेन सजीवत्वं कृतम् अनेन पुनरायुर्दीयते हविषः। हे हवि! 'दीर्घां प्रसितिं कृष्णाजिनाख्यामनु त्वां धां धारयामि कृष्णाजिने प्रक्षिपामीत्यर्थः। किमर्थम्। आयुषे त्वदीयायुर्वृद्ध्यर्थम्। प्रसितिः प्रसयनात् तन्तुर्वा जल वेति ( निरु० ६, १२ ) यास्कोक्तेरिह पिष्टग्राहकत्वात् प्रसितिशब्देन कृष्णाजिनमुच्यते। देवो व इत्यादिमन्त्रशेषो व्याख्यातः। का० ( २, ५, ८ ) चक्षुषे त्वेतीक्षत इति। हे हविः! चक्षुषे यजमानस्य चक्षुरिन्द्रियपाटवाय 'त्वा' त्वां पश्यामीति शेषः। यद्वा च-

क्षुषे तव चक्षुरादिबाह्येन्द्रियदानाय त्वामीक्षे । हविषः सजीवत्वे कृते चक्षुराद्यपेक्षा भवतीत्यनेन तत् क्रियते इति भावः । का० ( २, ५, ९ ) पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यमिति । हे आज्य ! त्वं 'महीनां गवां 'पयोऽसि क्षीरमसि क्षीरोत्पन्नत्वात् घृत पयःशब्देनोच्यते । महीति गोनाम ( निघ० २, ११ ) ॥ २० ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । संवपामि । समाप ओषधीभिःसमोषधयो रसेन । सꣳरेवतीर्जगतीभिः पृच्यन्ताꣳ संमधुमतीर्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥

पात्र्यां पिष्टान्यावपति "देवस्यत्वेति" । व्याख्यातम् । ननु ग्रहणं देवस्येति यदुक्तं तेनैव दर्शनेनाब्राह्मणतर्पणान्तं कर्म करिष्यति किमनेन पुनर्देवस्यत्वेति । संस्कारोज्ज्वलनार्थं हितं च पथ्यं च पुनःपुनरुपादिश्यमानं न दोषाय भवतीति । "संवपामि" । समित्येकीकृतामाचष्टे एकत्र क्षिपामि । अप उपसर्जनीः प्रतिगृह्णाति । "समाप ओषधीभिः संपृच्यन्ताम्" । पृची संपर्के । सङ्गच्छन्ताम् आप ओषधीभिः पिष्टाभिः । "समोषधयो रसेन" । सङ्गच्छन्तां च ओषधयः पिष्टाख्यरसेन उपसर्जनीभिः । आपो हि ओषधीनां रसः । "सꣳरेवतीजगतीभिः पृच्यन्ताम्" । पृची संपर्के । "रेवत्य आपो जगत्यः ओषधय" इति श्रुतिः । संपृच्यन्तां रेवत्य आपः जगतीभिरोषधीभिः पिष्टाख्याभिः । "संमधुमतीभिः पृच्यन्ताम्" । मधुशब्दो रसवचनः । संपृच्यन्तां मधुमत्स्वादोपेता आपः मधुमतीभिः । संपृच्यन्तां वा मधुमत्स्वादोपेताभिरोषधीभिः पिष्टाख्याभिः ॥ २१ ॥

का० [ २, ५, १० ] पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्य त्वेतीति । हस्ताभ्यामित्यन्तं व्याख्यातम । एतानि पिष्टानि 'संव-

पामि' पात्र्यां सम्यक् क्षिपामि । का० ( २, ५, १२—१३ ) उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समाप इतीति । पिष्टसंवपनीया आप उपसर्जन्यः । ता अग्नीदानयेदध्वर्युः पवित्राभ्यां प्रतिगृह्णीयात् । 'आपः' उपसर्जनीरूपाः 'ओषधीभिः' पिष्टरूपाभिः 'सम्पृच्यन्ताम्' । पृची सम्पर्के सङ्गच्छन्तां सम्यगेकीभवन्तु । तथा 'ओषधयः' पिष्टाख्या रसेन उपसर्जनीरूपेणोदकेन 'सम्पृच्यन्ताम्' । आपो हि ओषधीनां रसः । तथा 'रेवतीः' रेवत्यः आपः 'जगतीभिः' पिष्टाख्याभिः 'सम्पृच्यन्तां' रेवत्य आपो जगत्य ओषधय इति श्रुतेः ( १, २, २, २ ) । 'मधुमतीः' माधुर्य्योपेता आपः 'मधुमतीभिः' माधुर्य्योपेताभिः पिष्टरूपौषधीभिः सम्पृच्यन्ताम् । अपामोषधीनां परस्परं प्रीतिहेतुत्वात् सम्पर्को भवत्वित्यर्थः ॥ २१ ॥

जनयत्यै त्वा संयौमि । इदमग्नेः । इदमग्नीषोमयोः । इषे त्वा घर्मोऽसि विश्वायुः । उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् । अग्निष्टे त्वचं मा हिंसीत् । देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके॥२२॥

संयौति । "जनयत्यै त्वा" । द्व्यर्थोऽयं मन्त्रः । श्रुतिर्व्याचष्टे । जनेर्ण्यन्तस्य क्तिन् । जनयतिः । यजमानस्य जनयत्यैश्रीप्रजापशुभिर्यजमानं जनयितुं संमिश्रयितुं त्वां संयौमि । अथवा पुरोडाश उच्यते । जनयत्यै उत्पादनाय त्वां संमिश्रयामि । यथा त्वं मिश्रितः पुरोडाशभावमासाद्य अधिश्रितः सन् देवायोनेरग्नेरधिजायस इति । न ह्यनर्त्ते त्वां मर्त्यो जनयितुमर्हति । असंहरिष्यन्नालभते । "इदमग्नेरिदमग्नीषोमयोः" । अर्द्धशब्दः समविभागवचनो नपुंसकलिङ्गः तदभिप्रायमिदमिति नपुंसकलिङ्गता । आज्यमधिश्रयति । "इषे त्वा" । व्याख्यातम् । पुरोडाशमधिश्रयति । "घर्मोऽसि" । प्रवर्ग्यस्त्वमसि । "विश्वायुः" । सर्वायुः । विश्वं सर्वमायुरस्येति विश्वायुः । "विश्वायुरिति तदायुर्दधाती"तिश्रुतिः । पुरोडाशं प्रथयति ।

उरुप्रथस्व "उरुप्रथाः" । उरु विस्तीर्णं प्रथसे स्वभावतः तं त्वां ब्रवीमि "उरुप्रथस्व" । किञ्च उरु ते तव यज्ञपतिर्यजमानः पुत्रान्नपश्वादिभिः प्रथतां विस्तारमाप्नोतु । अङ्गिरभिमृशति । "अग्निष्टे" । हे पुरोडाश अग्निः ते तव त्वचं माहिंसीदिति । श्रपयति । "देवस्त्वा" । देवः सविता त्वां श्रपयतु वर्षिष्ठे उत्कृष्टे नाके स्वर्गे अधि उपरिस्थितम् । सविता वा नाके स्थितः । सविता नः संस्तर एव स ह्याधियज्ञिको यज्ञमधिकृत्य वर्त्तते । देवलोकः पुरोडाशशरीरस्य च यज्ञस्यैतज्जन्म यच्छ्रपणम्, स यदि देवलोके जायते अतस्तत्समानयोगक्षेमो यजमानोऽपि तत्रैव जनिष्यत इति तत्र जन्माशास्यत इति ॥ २२ ॥

का० [ २, ५, १४ ] संयौति जनयत्यै त्वेतीति । अपां पिष्टानाञ्च मिश्रीकरणं संयपनम् । हे जलपिष्टरूपपदार्थद्वय त्वां 'संयौमि' सम्यग् मिश्रीकरोमि । यु मिश्रणामिश्रणयोः । 'किमर्थं जनयत्यै' यजमानस्य प्रजोत्पादनार्थम् । जलपिष्टयोर्यथा मिश्रणं तथा शुक्रशोणितमिश्रणेन यजमानस्य प्रजोत्पत्तिर्भवति तदर्थं त्वां संयौमि । यद्वा जनयत्यै पुरोडाशोत्पत्त्यै त्वां संयौमि । का० ( २, ५, १५ ) 'संविभज्यासंहारिष्यन्नालभते इदमग्नेरिदमग्नीषोमयोरितीति । मिश्रीकृतस्य पिष्टस्यावदानाङ्कितं पिण्डद्वयं कृत्वा पुनरमेलयिष्यन् 'इदमग्नेः अग्निसम्बन्धि भवत्विति प्रथम पिण्डं स्पृशेत् । इदमग्नीषोमयोर्भवत्विति द्वितीयं स्पृशेत् । का० ( २, ५, १७ ) इषे त्वेत्याज्यमधिश्रयतीति । हे आज्य ! 'इषे' इष्यमाणवृष्ट्यर्थं त्वामधिश्रयामीति शेषः । आज्यप्रविलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम् । का० ( २, ५, १९ ] घर्मोऽसीति पुरोडाशमिति । हे पुरोडाश ! त्वं घर्मोऽसि । घृ क्षरणदीप्त्योः । घर्मशब्देन दीप्यमानः प्रवर्ग्य उच्यते । श्रप्यमाणतया दीप्यमानत्वात् प्रवर्ग्योऽसि । तथा 'विश्वायु' विश्वं कृत्स्नम् आयुर्यस्मात् स विश्वायुः । यस्माद्यजमानः सवमायुराप्नोतीति भावः । का० ( २, ५, २० ) उरुप्रथा इति प्रथयति यावत्कपालमिति । सर्वकपालेषु संश्लेषयितुं तं प्रसारयेत् । हे पुरोडाश ! त्वं स्वभावतः 'उरुप्रथाः' उरु विस्तीर्णं

यथा तथा प्रथते प्रसरतीत्युरुप्रथाः । अत इदानीमपि 'उरु प्रथस्व' प्रख्यातो भव । किञ्च 'ते यज्ञपतिः' तव यजमानः उरु विस्तीर्णं पुत्रपश्वादिभिः प्रथतां प्रख्यातो भवतु । का० ( ५, २, २१ ) अग्निष्ट इत्यद्भिरभिमृशतीति । हे पुरोडाश ! 'अग्निः' श्रपणाय प्रवृत्तः ते तव 'त्वचं' त्वक्सदृशमुपरितनभागं । मा हिंसीत् ॥ मा विनाशयतु अतिदाहेन मषीभावो विनाश सोऽत्र मास्त्वित्यर्थः । अवघातपेषणादिभिः श्रपणाज्जायमानश्च हविष उपद्रवो जलस्पर्शेन शाम्यतीति भावः । का० ( २, ५, २३ ) देवस्त्वेति श्रपणामिति । हे पुरोडाश ! सविता देवः ॥ वर्षिष्ठे ॥ अत्यन्तवृद्धे । नाके ॥ द्युलोकवर्तिनि नाकनाम्नि अग्नौ । त्वा ॥ त्वाम् । अधि ॥ अधिश्रित्य । श्रपयतु ॥ पक्कं करोतु । मनुष्यस्य श्रपणे कर्त्तृत्व मा भूदित्यभिप्रेत्य देवस्त्वेत्युच्यते । दिवि नाको नामाग्नी रक्षोहेति तित्तिरिवचनान्नाको नाम स्वर्गस्थोऽग्निः ॥ २२ ॥

मा भेर्मा संविक्था । अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात् । त्रिताय त्वा । द्विताय त्वा । एकताय त्वा ॥ २३ ॥

पुरोडाशमभिमृशति । "माभेर्मासंविक्थाः" । मा त्वं भैषीः मा च त्वं संविक्थाः । ओविजी भयचलनयोः । तत्र भयं प्रतिषिद्धं चलनं त्वत्र निषिध्यते । न भेतव्यं न चलितव्यमित्यर्थः । पुरोडाशमभिवासयति । "अतमेरुर्यज्ञः" । तमु अभिकाङ्क्षायाम् । यद्ययं धातुरभिकाङ्क्षामात्रे पठ्यते तथापि श्वासाभिकाङ्क्षायां भविष्यति । तमनशीलस्तमेरुः न तमेरुः अतमेरुः यज्ञः । अतमेरुर्यजमानस्य प्रजा भूयात् । भवेत् । पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति । "त्रिताय त्वा द्विताय त्वा एकताय त्वा" । निनयामीति द्रव्यपरो निर्देशः । निनयामीति शेषः । एवं द्विताय एवमेकताय । तत आप्त्याः संबभूवुः त्रितो द्वित एकत इत्येवमादिरितिहासोयमवगन्तव्यः ॥ २३ ॥

का० ( २, ५, २४ ) मा भेरित्यालभत इति । हे पुरोडाश ! त्वं । मा भे ॥ भयं मा कार्षीः । मा संविक्थाः ॥ चलनं मा कार्षीः । ञिभी भये । ओविजी भयचलनयोरित्यनयोः प्रयोगौ । का० ( २, ५, २५ ) अतमेरुरिति शृतावभिवासयति भस्मना वेदेनोपवेषेण वेति । यज्ञः ॥ यागहेतुः पुरोडाशः । अतमेरुः' भूयात् । तमु ग्लानौ । ताम्यतीति तमेरुः औणादिक एरुप्रत्ययः । न तमेरुरतमेरुः । भस्माच्छादनेन ग्लानिरहितो भवतु । यजमानस्य प्रजा ॥ पुत्रपौत्रप्रपौत्रादि अतमेरु ग्लानिरहिता भूयात् । यजमानस्य प्रजायाः कदाचिद्दुःखं माऽस्त्वित्यर्थः । का० [ २, ५, २६ ) पात्र्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयत्यभितप्य प्रत्यगग्न्यन्दमानं त्रिताय त्वेति प्रतिमन्त्रमिति । हे पात्र्यङ्गुलिप्रक्षालनोदक ! त्रिताय त्रितनाम्ने देवाय त्वां निनयामीति शेषः । तथा द्विताय त्वा निनयामि । तथा एकताय त्वा निनयामि । पूर्वं कुतश्चिद्धेतोः भीतोऽग्निरपः प्राविशत्ततो देवास्तं ज्ञात्वा जगृहुस्तदाऽग्निना वीर्य्यमप्सु मुक्तं तत आप्त्या उत्पन्नास्त्रितद्वितैकतसंज्ञास्ते देवैः सह चरन्तो यज्ञे पात्रीप्रक्षालनजललक्षणं भागं लेभिरे इति श्रुतिकथानुसन्धातव्या ( १. २, ३. १ )॥२३॥

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे᳖ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । आद॑देऽध्वर॒कृतं॑ दे॒वेभ्यः॑ । इन्द्र॑स्य बा॒हुर॑सि॒ दक्षि॑णः स॒हस्र॑भृष्टिः श॒तते॑जा वा॒युर॑सि ति॒ग्मते॑जा द्वि॒ष॒तो व॒धः ॥ २४ ॥

स्फ्यमादत्ते । "देवस्य त्वे"ति व्याख्यातम् । "आददे" गृह्णामि । अध्वरं करोतीति "अध्वरकृतम् देवेभ्यो"र्थाय । आलभ्यजपति । "इन्द्रस्य बाहुर्दक्षिणस्त्वमसि" । एष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिणः "सहस्रभृष्टिः" बहुभारः "शततेजा" बहूनि तेजांसि यस्य स शततेजाः । "वायुरसि तिग्मतेजाः" । तिग्मं तेजः । तेजतेरुत्साहकर्मणः उत्साह एव तेजो यस्य स तथोक्तः । "द्विषतः" शत्रो"र्वधः"वधकः ॥ २४ ॥

का० ( २, ६, १३ ) देवस्य त्वेति स्फ्यमादायेति । देवस्य त्वेति

व्याख्यातम् । देवेभ्यो देवोपकारार्थं अध्वरकृतं अध्वरं करोतीति वेदिखननादिद्वारेणेत्यध्वरकृतं स्फ्यमहमाददे गृह्णामि । का० ( २, ६, १३ ] सतृणᳪ सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरितीति । हे स्फ्य ! त्वमिन्द्रस्य दक्षिणो बाहुरसि । तेन बाहुना धृतत्वात्तत्समानवीर्य्योपेतत्वाद्वा स्फ्यस्य बाहुरूपत्वोपचारः । किम्भूतः ? स्फ्यः । सहस्रभृष्टिः । भृष्टिर्भर्जनं पाको मारणमिति यावत् । सहस्रसङ्ख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः । तथा शततेजाः । शतं तेजांसि यस्य सः बहुधा दीप्यमानः । किञ्च वायुरसि । न केवलमिन्द्रबाहुसदृशः किन्तु वायुसदृशोऽप्यसि । अत एव तिग्मतेजाः । तीक्ष्णतेजाः यथा वायुर्वह्निं प्रदीप्य तीव्रां ज्वालामुत्पादयंस्तीव्रतेजा भवति । एव स्फ्योऽपि स्तम्बच्छेदरूपं कर्म कुर्वंस्तीव्रतेजा उच्यते । तथा द्विषतो बधः । हन्तीति बधः कर्मद्वेषिणामसुरादीनां हन्तेत्यर्थः ॥ २४ ॥

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिᳪसिषम् । व्रजं गच्छ गोष्ठानम् । वर्षतु ते द्यौः । बधान देव सवितः परमस्यां पृथिव्याᳪ शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥

प्रहरति । "पृथिविदेवयजनि" । वेदिः संबोध्यते । हे पृथिवि देवयजनि देवा यस्यामिज्यन्ते सा तथोक्ता । "ओषध्यास्ते" तव संबन्धिन्या "मूलं माहिᳪसिषम्" । तृहि हिसि हिंसायाम् । 'माङ्लुङ्' माविनाशिषं वज्रेण प्रहरन् । पुरीषमादत्ते । "व्रजं गच्छ" व्रजन्त्यस्माद्गाव इति व्रजो घोषः गोवाटो वा उच्यते । गोव्रजे वा परिवृतं वा गवां स्थानं गच्छ । वेदिं प्रेक्षते । " वर्षतु ते द्यौः" । वर्षतु तव द्युलोकः । शान्त्यर्थं वचनम् । उत्करे करोति । " बधान " । बध बन्धने बन्धनं कुरु । हे " देव सवितः परमस्यां पृथिव्याम्" इति श्रुतिः । " परमस्यां पृथिव्यां " यत्र अन्धतामिश्रो नरकः तत्र अन्धे-

तमसि बधानेति यदाह । " शतेन पाशैः " बहुभिः पाशैः । " योस्मान्द्वेष्टि " शत्रुः । " यं च वयं द्विष्मः " शत्रुं " तम् " " अतः " । अस्मात् अन्धतमसः " मा मौक् " । मुचॢ मोक्षणे । मा मुञ्च ॥ २५ ॥

का० ( २, ६, १५, १६ ) पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरतीति । हे पृथिवि ! हे देवयजनि ! देवा इज्यन्ते यस्यां सा देवयजनी तस्याः सम्बोधने हे देवयजनि ! ते तव ओषध्यास्तृणरूपाया मूलमहं मा हिंसिषम् । मा विनाशयामि । का० ( २, ६, १७ ) व्रजं गच्छेति पुरीषमादत्त इति । स्फ्यप्रहारोत्पन्ना मृत् पुरीषमुच्यते । हे पुरीष ! त्वं व्रजं गच्छ । व्रजन्ति गच्छन्ति स्थातुं गावो यत्र स देशो व्रजस्त किम्भूतम् गोष्ठानम् गवां स्थानमिदानीमवस्थितिर्यत्र तम् गोयुक्त तदीयं स्थानं गच्छेत्यर्थः ॥ का० [ २, ६, १८ ] वर्षतु त इति वेदिं प्रेक्षत इति ॥ हे वेदे ! ते तुभ्यं त्वदर्थं द्यौर्द्युलोकाभिमानी देवो वर्षतु जलसेकं करोतु । वृषु सेचने वर्षणेन खननजनितदुःखशान्तिरस्त्वित्यर्थः ॥ का० ( २, ६, १९ ) बधानेत्युत्करे करोतीति ॥ स्फ्योत्खातां मृदमुत्करे त्यजेत् । हे देव सवितः ! । योऽस्मान् द्वेष्टि द्वेषं करोति वयं च यं शत्रुं द्विष्मस्तमुभयविधं शत्रुं परमस्यां पृथिव्यां बधान । परमा अन्तिमा पृथिवी । छान्दसः स्याडागमः । उत्करे क्षिप्तायां धूल्यां निगूढस्य शत्रोस्तत्र बन्धनं कुरु यत्र भूमेरन्तिमप्रदेशेऽन्धतामिस्रो नरकोऽस्ति । तथा च श्रुतिः ( १, २, ४, १६ ) अन्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति । कैर्बन्धनं कर्त्तव्यं तदाह शतेन पाशैः शतसङ्ख्याकाभिर्बन्धनरज्जुभिः । किञ्च अस्मादन्धतामिस्रान्नरकात्तं मा मौक् कदाचिदपि मा मुञ्च ॥ २५ ॥

**अपा॒ररु॑ं पृथि॒व्यै दे॑व॒ यज॑नाद्‌बध्यासम् । व्र॒जं ०–० मौक् । अर॑रो दि॒वं मा प॑सः । द्र॒प्सस्ते॒ द्यां मा स्क॑न् । व्र॒जं० —०मौक् ॥ २६ ॥**

द्वितीयं प्रहरति । " अपाररुम् " । अररुः असुरः तमपनीय । " पृथिव्यै " पृथिव्याः देवयजनाच्च अपाररुं " बध्या-

सम् ” । व्रजं गच्छेति समानम् । अभिन्यस्यन्यग्नीदुत्करमररो-दिवमिति । हे “ अररो ” त्वं “ दिवं ” द्युलोकं “ मा पप्तः ” । मा गमः । तृतीयं प्रहरति द्रप्सस्तेद्याम् । योऽस्याः पृथिव्या उपजीवनीयो रसः स द्रप्सः ते तव द्युलोकम् “ मा स्कन् ” मास्कांसीत् । मा स्कन्तु । व्रजं गच्छेति समानम् ॥ २६ ॥

का० ( २, ६, २१ ) अपारुममिति द्वितीय प्रहरतीति । पृथिव्यै देवयजनात् पृथिव्याः सम्बन्धिनो देवयजनाख्याद्वेदिस्थानात् अर-रुम् अररुनामानमसुरमपबध्यास्म । अपहन्याम यथा हतो भवति तथा करवाणि । अनेन मन्त्रेण द्वितीयवारं पूर्ववत् प्रहरेत् व्रजं गच्छेतु वध्यानां मन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ॥ का० ( २, ६, २२ ) अभिन्यस्यन्त्यग्नीदुत्करमररो दिवमिनीति ॥ हे अररो असुर ! दिवं द्युलोकं यागफलरूपं त्वं मा पप्त मा गमः । स्वर्गे त्वया न गन्तव्यम् । पप्तत् गतौ पत पुषादिर्लुङि पुमागमे रूपम् ॥ का० ( २, ६, २३ ) द्रप्सस्त इति तृतीयमिति । हे वेदिदेवते ! ते तव पृथिवीरूपाया यो द्रप्सः उपजीव्यो रसः स द्यां द्युलोकं मा स्कन् मा स्कन्दतु मा गच्छतु स्कन्दिर्गतिशोषणयोः । व्रज गच्छे-त्यादिमन्त्रत्रयस्य प्रयोगो व्याख्या च पूर्ववत् ॥ २६ ॥

गायत्रेण त्वा छन्दसा परिगृह्णामि । त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि । जागतेन त्वा छन्दसा । परिगृह्णामि । सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च ॥ २७ ॥

पूर्वं परिगृह्णाति । “ गायत्रेणत्वा ” । त्वाशब्देन वि-ष्णुरुच्यते । ते “प्राञ्चं विष्णुं निपाद्ये”ति श्रुतिः । “ गायत्रेण त्वा छन्दसा परिगृह्णामि ” । एवमुत्तरयोः । त्रैष्टुभेन जागतेने-ति विशेषः । उत्तरं परिग्रहं परिगृह्णाति । पूर्वेण परिग्रहेण विष्णुं यज्ञं परिगृह्य तेन इमां पृथिवीं लब्ध्वा चोत्तरेण परिग्रहेण व-क्ष्यमाणगुणैरयोजयन्देवाः । “ सुक्ष्मा चासि शिवा चासी-

ति " दक्षिणतः । सुक्ष्मा इति पृथिवीनाम । शोभना पृथिवी त्वमसि । शिवा शान्ता च त्वमसि । पश्चिमतः । " स्योना चासि सुषदा चासि " । स्योनमिति सुखनाम । सुखनामरूपा च त्वमसि । शोभनं यस्यां सीदन्ति सा सुषदा । उत्तरतः । " ऊर्जस्वती चासि पयस्वती च " । अन्नवती चासि पयोविकारैरसैस्तद्वती च ॥ २७ ॥

का० ( २, ६, २५ ) पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणाति प्रतिमन्त्रमिति ॥ यस्मात् प्रदेशादसुरा निष्काशितास्तत्र वेदिरियत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्वः परिग्रहः । विष्णुर्देवता मन्त्रत्रयस्य । ते प्राञ्चं विष्णुं निपाद्य छन्दोभिरभितः पर्यगृह्णन्निति । श्रुतेः ( १, २, ५, ६ ) हे विष्णो ! त्वा त्वां गायत्रेण छन्दसा गायत्र्यादिच्छन्दस्त्रयरूपतया भावितेन स्फ्येन दिक्त्रये परिगृह्णामि । एवं त्रैष्टुभेन जागतेनेत्युत्तरमन्त्रयोः । ततः छन्दोदेवता दिक्त्रयेऽसुरेभ्यस्त्वां पालयिष्यन्ति । पूर्वस्यामाहवनीय एव पालकोऽस्तीति भावः । प्रजापतिपुत्रा देवा असुराश्च पूर्वं स्पर्धां चक्रुस्तदा देवान् पराजय प्राप्तान्मत्वा भूमिमसुरा विभेजुस्तदा देवा वामनरूपं विष्णुमग्रे कृत्वाऽसुरानागत्यास्मभ्यमपि भूम्यंशो दातव्य इति तानयाचिषु । ततोऽसुरा अनूयन्तोऽयं विष्णुर्यावति भूभागे शेते तावान् भवदीयोऽस्त्वित्यूचुस्ततो देवा बह्वेतदस्माकमित्युक्त्वा ते प्राञ्चं विष्णुं निपात्य गायत्रेणेत्यादिमन्त्रैर्यज्ञभूमिं जगृहुः । यज्ञो विष्णुः स यत्र तिष्ठति सैव यज्ञभूमिरिति तैर्विदितत्वाद्वेदिरिति तद्भूमेर्नामेति ( १, २, ५, १—७ ) श्रुतिकथामनुसन्धाय वेदिग्रहणं विधेयम् ॥ का० ( २, ६, ३१ ) उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मा स्योनोर्जस्वतीति ॥ वेदिखननात् पूर्वं क्रियमाणः पूर्वः परिग्रहः पश्चात् क्रियमाण उत्तरपरिग्रहः । तत्रापि पूर्ववद्दिक्त्रये स्फ्येन, रेखात्रयं कार्य्यम् । हे वेदे ! त्वं सुक्ष्मासि शिवा शान्ता चासि । क्ष्मा भूमिः शोभना क्ष्मा सुक्ष्मा खननेनाश्मादिदोषनिवर्त्तनं भूमेः शोभनत्वम् । उग्रस्यासुरस्य निष्काशनेन शान्तत्वम् । गुणद्वयस्यान्योन्यसमुच्चयार्थौ चकारौ एकोऽयं

मन्त्रः । स्योना सुखरूपासि । स्योनमिति सुखनाम ( निघ० ३, ६) सुषदा सुष्ठु सीदन्ति देवा यस्यां सा सुषदा । सम्यगुपवेशनयोग्या चासि । चकारौ पूर्ववत् । द्वितीयोऽयं मन्त्रः । ऊर्जस्वती पयस्वती चासि । ऊर्जःशब्दोऽन्नवाची । पयःशब्दस्तद्विकारदध्यादिवाची । तदुभयवती । चौ पूर्ववत् । तृतीयो मन्त्रः ॥ २७ ॥

पुरा क्रूरस्य वि॒सृपो॑ विरप्शिन्नुदा॒दाय॑ पृथि॒वीं जी॒वदा॑नुम् । यामैर॑यंश्च॒न्द्रम॑सि स्व॒धाभि॒स्तामु॒ धीरा॑सोऽनु॒दिश्य॑ यजन्ते ॥ प्रोक्षणी॒रासा॑दय । द्वि॒षतो॑ ब॒धोऽसि ॥ २८ ॥

वेदिमनुमार्ष्टि । " पुराक्रूरस्येति " । निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यं पश्चान्मन्त्रार्थः तथा क्षिप्रमवगमो भवतीति । देवा असुरैः सह संग्रामं करिष्यन्त इदमूचुः यदस्याः पृथिव्या अनुपहतं देवयजनं तच्चन्द्रमसि स्थापयामः । तत्र यदि कथं चिदस्मानसुरा जयेयुः ततस्तेनैव देवयजनेन पुनः प्रतिक्रियां करिष्यामः । तदेतच्चन्द्रमसि कृष्णमुपलभ्यते । एतदियमृक्त्रिष्टुबुक्तवती । " पुराक्रूरस्य " क्रूरशब्दः संग्रामवचनः पञ्चम्यर्थेषष्ठी । प्राक्संग्रामात् । " विसृपः " " सृपितृदोः कसुन्नि"ति कसुन्प्रत्ययान्तन्तुमर्थेऽव्ययं पञ्चम्यर्थे । विविधं सर्पन्ति योद्धारोस्मिन्निति विसृपाः "विरप्शिन्नि"ति आमन्त्रितं महन्नाम । स च विष्णुर्यज्ञवेदित्वमापन्नः सर्वैस्त्रिभि र्वेदैर्निर्वर्त्यमानो विविधं रप्शति शब्दं करोति । हेविरप्शिन् विष्णोशृणु " उदादाय " उत्क्षिप्य प्रकृतत्वाद्देवाः " पृथिवीं जीवदानुम् " । जीवितस्य दात्रीं सारभूतामित्यर्थः । "यामैरयंश्चन्द्रमसिस्वधाभिः" या मैरयन् । ईर गतौ । अनेकार्थत्वाद्धातूनामिहस्थापनार्थः । चन्द्रमसि स्थापितवन्तः । स्वधाभिः स्वधाशब्दोऽन्नवचनः, इह त्वन्नहेतुभूतास्तिस्रो विद्या गृह्य-

न्ते । " यां चन्द्रमसि ब्राह्मणा दधु " रिति श्रुतेः । त्रयी-
लक्षणे ब्राह्मणाः संहितां यां पृथिवीं चन्द्रमसि न्यदधुः । " ता-
मु धीरासो अनुदिश्य यजन्ते " । तां पृथिवीं धीरासो मेधा-
विनः अनुदिश्य दर्शनेन सम्यक्संपाद्य अद्यापियजन्ते इति
दर्शनप्रसंसा । प्रैषः । " प्रोक्षणीरासादय " । प्रोक्ष्यते आ-
भिरिति प्रोक्षण्यः ता आसादय स्थापय । स्फ्यं प्रहराति ।
" द्विषतो बधोसि " । द्विष्टुर्बधो विनाशस्त्वमसि ॥ २८ ॥

का० ( २, ६, ३२ ) पुरा क्रूरस्येत्यनुमार्ष्टीति ॥ अत्रेयमाख्यायिका मन्त्रेऽभिप्रेता । कदाचिद्देवानामसुरैः सह संग्राम उपस्थितस्तदा देवैर्मिथो मन्त्रितं यदस्या भूमेरुत्कृष्ट देवयजनस्थलं तच्चन्द्रे संस्थाप्य युद्धं कुर्मस्तत्र यद्यप्यस्माक पराजयः स्यात्तदा देवयजने यागं विधाय पुनर्दैत्यपराजयं करिष्याम इति संमन्त्र्य भूमेः सारभागं देवयजनं चन्द्रे स्थापयामासुस्तत् कृष्णवर्णमिदानीमपि दृश्यत इत्याख्यानमयं मन्त्रो ब्रूते ( १, २, ५, १८ ) ॥ पुरा क्रूरस्येति त्रिष्टुप् चन्द्रदेवत्या । विरप्शीति महन्नाम ( निघ० ३, ३ ) विविधं रपति वेदत्रयरूपेण शब्दं करोतीति विरप्शी । यज्ञो वेदित्वं प्राप्तो विष्णुः सम्बोध्यते । हे विरप्शिन् विष्णो परमेश्वर ! त्वं शृणु अनुगृहाणेति शेषः । क्रूरशब्दोऽत्र संग्रामवाची । संग्रामो वैक्रूरमिति श्रुतेः ( १, २, ५, १९ ) । विविधं सर्पन्ति योधा यस्मिन्निति विसृप् । तस्येति क्रूरविशेषणं पञ्चम्यर्थौ षष्ठ्यौ । विसृपो नानायोधयुतात् क्रूरात् युद्धात् पुरार्थाद्देवाः जीवदानुं जीवं ददातीति जीवदानुस्तां जीवस्य धात्री सारभूतां यां पृथिवीमुदादाय ऊर्ध्वं गृहीत्वा स्वधाभिः वेदैः सह चन्द्रमसि इन्दौ पैरयन् प्राक्षिपन् स्थापयामासुः धीरासः धीरा मेधाविनः तामु उ एवार्थे तामेव चन्द्रस्थां पृथिवीमनुदिश्य दर्शनेन सम्पाद्य सैव भूमिरस्यां वेद्यां विद्यत इति भावयित्वा यजन्ते यागं कुर्वन्ति । स्वधाशब्दो यद्यप्यन्नवाची तथाप्यत्रान्नहेतुभूता वेदत्रयी कथ्यते । यां चन्द्रमसि ब्रह्मणा दधुरिति श्रुतेः [ १, २, ५, १९ ] ब्रह्मणा वेदेन सहेत्यर्थः । अनेन मन्त्रेण खातायां वेद्यां लोष्टकृतवैषम्यनिवृत्तये समीकरणरूपं मार्जनं कु-

स्यात् । प्रोक्षणीरासादयेति अग्नीधं प्रति प्रैषः । प्रोक्ष्यन्त आभिरिति प्रोक्षण्य आपस्ता आसादय वेद्यां स्थापय ॥ का० ( २, ६, ४२ ) द्विषतो वध इति स्फ्यमुदञ्चं प्रहरतीति । हे स्फ्य ! त्व द्विषतः शत्रोर्बधोऽसि हिंसकोऽसि ॥ २८ ॥

**प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः । निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । अनिशितोऽसि सपत्नक्षिद् वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि । प्रत्युष्टꣳ०—० । अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि ॥ २९ ॥**

अथ स्रुवमादत्ते तं प्रतपति । " प्रत्युष्ट " मिति । व्याख्यातम् । स्रुवंसंमार्ष्टि । " अनिशितोऽसि " । शो तनूकरणे । निशितस्तीक्ष्णीकृतः न निशितः अनिशितः अतीक्ष्णीकृतस्त्वमासि । तथापि " सपत्नक्षित् " सपत्नान् क्षिणोतीतिसपत्नक्षित् । क्षिणक्षिणिहिंसायाम् । क्षिणहिंसार्थः। यतश्चत्त्वं यजमानस्य सपत्नक्षित अतो " वाजिनं त्वा " । वाजशब्दोऽन्नवचनः इह तु यज्ञवचनः । यतोऽसि देवानामन्नम् । " यज्ञोदेवानामन्नमि " तिश्रुतिः । तं वाजमन्नं यज्ञाख्यं योऽर्हति स वाजी अर्हार्थे इति णिन् । वाजिनं यज्ञियं त्वाम् " वाजेध्यायै " ञिइन्धी दीप्तौ । यज्ञोज्ज्वलनार्थम् । " संमार्ज्मि " । संशोधयामि । मृजूष् शुद्धौ । स्रुवं च प्रतपति । " प्रत्युष्टमि"ति । व्याख्याते यजुषी । सम्मार्ष्टि स्रुचम् " अनिशितासि " । व्याख्यातम् । अनिशितेति स्त्रीत्वविवक्षायां टाप् प्रत्ययः वाजिनीमिति ङीप् प्रत्ययः । एतावानेव विशेषः ॥ २९ ॥

का० ( २, ६, ४६ ) स्रुव प्रतप्य पूर्ववदिति । यथा शूर्पाग्निहोत्रहवण्यो· प्रत्युष्टमिति प्रतपन कृतं तथा स्रुवस्यापि कार्य्यमित्यर्थः । मन्त्रो व्याख्यात· ॥ का० [ २, ६, ४६ ] वेदाग्रैरन्तरतः प्राक्सम्मा-

पूर्वं निशित इतीति । हे स्रुव ! त्वमनिशितोऽसि । शो तनूकरणे । नितरां शितस्तीक्ष्णीकृतो निशितस्तथा न भवतीत्यनिशितः । अस्मद्विषये तीक्ष्ण उपद्रवकारी न भवसीत्यर्थः । यतः सपत्नक्षित् । क्षिणु हिंसायाम् । सपत्नानस्मच्छत्रून् क्षिणोति हिनस्तीति सपत्नक्षित् । अत एव त्वां सम्मार्ज्मि सम्यक् शोधयामि । मृजू शुद्धौ । किम्भूतं त्वां वाजिनं वाजोऽन्नमस्यास्तीति वाजिनं यज्ञद्वारा अन्नहेतुत्वादन्नवन्तम् । यद्वा वाजो यज्ञस्तद्वन्तं यज्ञो हि देवानामन्नमिति श्रुतेः ( ५, १, १, २ ) । वाजं यज्ञाख्यमन्नमर्हतीति वाजिनम् । अर्हार्थे इनप्रत्ययः । किमर्थं सम्मार्ज्मि । वाजेध्यायै ञिइन्धी दीप्तौ । इन्धनं इध्या दीप्तिः । वाजस्येध्या वाजेध्या तस्यै वाजेध्यायै यज्ञस्य दीप्त्यै प्रकाशनार्थम् । शोधितेन स्रुवेणाज्ये गृहीते हुते च सति अग्निर्दीप्यते । तद्दीप्त्याहुतिफलभूतमन्नं प्रकाशितं भवतीत्यर्थः ॥ का० ( २, ६, ४७, ४८ ) प्रतप्य प्रतप्य प्रयच्छत्यनिशितेति स्रुच इति । अनिशितेति मन्त्रेण स्रुचास्तस्रो जुहूपभृद्ध्रुवाः संमृज्य प्रत्येकं प्रत्युष्टमिति मन्त्रेण प्रतप्य प्रतप्य वेद्यां स्थापनार्थमध्वर्यवे प्रयच्छतीति सूत्रार्थः । प्रत्युष्टमिति व्याख्यातम् । अनिशितेत्यपि व्याख्यातम् । स्रुवस्य पुंस्त्वादादौ स्रुवसम्मार्जनम् । स्रुचां स्त्रीत्वात्पश्चात् । योषा वैस्रुग्वृषा स्रुव इत्यादिश्रुतेः ( १, ३, १, ९ ) । जुह्वादीनां स्रुचां स्त्रीलिङ्गत्वात्तद्विशेषणयोरनिशिता वाजिनीमित्यनयोः स्त्रीत्वं विशेषः ॥ २९ ॥

**अदि॑त्यै॒ रास्ना॑सि । विष्णो॑र्वे॒ष्यो॑ऽसि । ऊ॒र्जे त्वा॑ । अद॑ब्धेन त्वा॒ चक्षु॒षाव॑पश्यामि ✝ अ॒ग्नेर्जि॒ह्वासि॑ सु॒हूर्दे॒वेभ्यो॒ धाम्ने॑ धाम्ने मे भ॒व यजु॑षे यजुषे ॥ ३० ॥**

" योक्त्रेणपत्नीᳲ संनह्यति । " आदित्यैरास्नासि " अदित्याः संबन्धिनी या रास्ना सा त्वमसि । रास्ना रसनाः । ऊर्ध्वमुद्गृह्णाति "विष्णोर्वेष्योऽसि । विष्णोर्यज्ञस्य वेष्यः । विष्लृ व्याप्तौ वेष्टृ वेष्टने । अनयोर्द्धात्वोरन्यतरस्य रूपम् । यज्ञस्य व्यापनं वेष्टनं वा त्वमसि । वेष्य आवर्त्त उच्यते । इत्यपर-

म् । आज्यमुद्रासयति । "ऊर्जेत्वे"ति । व्याख्यातम् । पत्न्याज्यमवेक्षते । "अदब्धेनेति" । आज्यमुच्यते । "अदब्धेन" । दभ्नातिर्हिंसार्थः अनुपहिंसितेन त्वां चक्षुषा अर्वाचीनं पश्यामि । किञ्च "अग्नेर्जिह्वासि" । यदा वा एतदग्नौ जुहति अथाग्नेर्जिह्वा इवोत्तिष्ठति ज्वालोत्पत्तिनिमित्तमित्यर्थः । "सुहूर्देवेभ्यः" । साधु हूयतेऽनेनेति सुहूः । अथवा शोभनमाह्वानं यस्य देवेभ्योर्थाय तदाज्यं सुहूः । उपकृत्य प्रत्युपकारं प्रार्थयते। "धाम्ने धाम्ने मे भव यजुषे यजुषे" । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च। धाम्ने धाम्ने यजुषे यजुषे इति द्विर्वचनं वीप्सार्थम् । मम यज्ञस्य यावन्ति स्थानानि यावन्ति यजूंषि तावन्ति व्याप्नुहीत्यर्थः ॥ ३० ॥

का० [ २, ७, १ ) पत्नीं संनह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरन्त्यर्धावासोऽदित्यै रास्नासीतीति । हे योक्त्र ! अदित्यै अदित्या भूम्यास्त्वंरास्नासि रशना भवसि ॥ का० ( २, ७, २, ३ ) दक्षिण पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्य इति न ग्रन्थिं करोतीति । हे दक्षिण पाश ! त्व विष्णोर्यज्ञस्य वेष्योऽसि व्यापकोऽसि । विप्लृ व्याप्तौ ॥ का० (२, ७, ४ ) ऊर्जे त्वेत्याज्यमुद्वास्येति । हे आज्य ! त्वामुद्वासयामीति शेषः । किमर्थम् ! ऊर्जे उत्तमरसलाभाय । विलापितं घृत सुस्वादु भवति ॥ का० ( २, ७, ४ ) पत्नीमवेक्षयत्यदब्धेनेतीति । दभ्नातिहिंसार्थः । हे आज्य ! अदब्धेन अनुपहिंसितेन चक्षुषा त्वामवपश्यामि । अर्वाचीनं यथा तथाधोमुखी सती पश्यामि । किञ्च हे आज्य ! त्वमग्नेर्जिह्वासि । यदाज्यमग्नौ हूयते तदा जिह्वज्वालोत्पद्यतेऽतस्त्वमग्नेर्जिह्वा । किम्भूतं देवेभ्योऽर्थाय सुष्ठु हूयते इति सुहूः पुंस्त्वं छान्दसम् । यद्वा जिह्वाविशेषणं सुष्ठु हूयन्ते देवा आहूयन्तेऽनया सा सुहूर्जिह्वा । ज्वालां दृष्ट्वा आयन्तीत्यर्थः । अतो मे मम धाम्ने धाम्ने भव तथा यजुषे यजुषे च भव । धाम स्थानम् । फलेन युज्यत इति यजु शब्दो यागवाची । धाम्ने धाम्ने तत्त-

*यागफलोपभोगस्थानसिद्ध्यर्थं भव । यजुषे यजुषे तत्तद्यागसिद्धये योग्यं भवेत्यर्थः ॥ ३० ॥*

**सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । सवितुर्वः प्रसव०—० रश्मिभिः । तेजोऽसि शुक्रमस्यमृतमसि । धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ ३१ ॥**

## इति माध्यन्दिनीयायां वाजसनेयिसंहितायां प्रथमोऽध्यायः ॥

---

आज्यमुत्पुनाति । " सवितुस्त्वा " सवितुः प्रसवे वर्त्तमानस्त्वामुत्पुनामि । व्याख्यातमन्यत् । प्रोक्षणीरुत्पुनाति । " सवितुर्व " इति । व्याख्यातम् । आज्यमवेक्षते । " तेजोऽसि शुक्रमसि अमृतमसि " योह्येतद्भक्षयति ददाति जुहोति वा तस्य तेजःप्रभृतीनि भवन्तीति वाक्यार्थः । यद्वा यत एवैतद्गुणयुक्तमाज्यम् । आज्यं गृह्णाति । " धामनामासि " । धाम स्थानम्, अन्नम् आयतनम् । धीयतेऽस्मिन्निति धाम इति । धाम असि । नामयति सर्वाणि भूतानि आत्मानं प्रति अतो नाम । " प्रियं देवानाम् " इष्टमभिप्रेतं देवानाम् । " अनाधृष्टम् " । अनाधर्षितम् अप्रतिहतं रक्षोभिः । " देवयजनमसि " । देवा अनेन इज्यन्ते इति देवयजनम् ॥ ३१ ॥

इति मन्त्रभाष्ये उवटकृतौ प्रथमोऽध्यायः ॥ १ ॥

---

का० [ २, ७, ७, ) सवितुस्त्वेत्याज्यमुतपुनातीति । सवितुर्देवस्य प्रसवे आज्ञायां वर्त्तमानः सन्त्वामुत् पुनामि शोधयामि । व्याख्यातमन्यत् ॥ का० ( २, ७, ८ ) प्रोक्षणीश्च पूर्ववदिति । सवितु-

वे. । वो युष्मानुत्पुनामीति व्याख्यातम् ॥ का० ( २, ७, ९) आज्य-मवेक्षते तेजोऽसीति । हे आज्य ! त्वं तेजोऽसि । शरीरकान्तिहे-तुत्वात्तेजस्त्वम् । शुक्रमसि दीप्तिमदसि । स्निग्धरूपत्वाद्दीप्तिमत्त्व-म् । अमृतमसि विनाशरहितमसि । बहुदिवसावस्थानेऽप्योदनादि-वत् पर्य्युषितत्वादिदोषाभावादविनाशित्वम् ॥ का० ( २, ७, ११, १२ ) स्रुवेणाज्यग्रहणं चतुर्जुह्वां धाम नामेति सकृन्मन्त्र इति । हे आज्य ! त्वं धाम स्थानमसि धीयते स्थाप्यते चित्तवृत्तिर्देवैरत्रेति धाम । तथा नाम नामयति आत्मानं प्रति सर्वाणि भूतानीति ना-म । आज्यं दृष्ट्वा सर्वेऽप्यत्तुं नमन्ति । तथा देवानां प्रियमिष्टम् अ-नभिभूतम् । गतसारत्वदोषेणातिरस्कृतं चरुपुरोडाशादीनि चिर-स्थित्या गतसाराणि स्युरितीदं न तथा । देवयजनं देवा इज्यन्तेऽने-नेति यागसाधनम् ईदृश त्वमस्यतस्त्वां गृह्णामीति वाक्यशेषः ॥ ३१ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।

शाखाद्याज्यग्रहान्तोऽयमध्याय प्रथमोऽगमत् ॥ १ ॥

## द्वितीयोऽध्यायः ॥

कृष्णोऽस्याखरेष्ठोऽग्नये॑ त्वा॒ जुष्टं॒ प्रोक्षा॑मि । वेदि॑रसि ब॒र्हिषे॑ त्वा॒ जुष्टां॒ प्रोक्षा॑मि । ब॒र्हि॑रसि स्रु॒ग्भ्यस्त्वा॒ जुष्टं॒ प्रोक्षा॑मि ॥ १ ॥

इध्मं प्रोक्षति " कृष्णोस्याखरेष्ठः " । अस्ति कृष्णशब्दो वर्णवचनोऽन्तोदात्तः। अस्ति कृष्णशब्दो मृगवचन आद्युदात्तः। तदिहाद्युदात्तत्वात्कृष्णमृगो गृह्यते । तथाहि श्रुतिः । "यज्ञोह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचारेति ।" इध्मपूलक उच्यते । कृष्णमृगो यज्ञस्त्वमसि यज्ञसाधनात्वाद् यज्ञ इत्युच्यते । "आखरेष्ठः" । आङध्यर्थे । आहवनीयाख्ये खरे, खं स्वर्ग राति ददाति, । तत्र अधि उपरि तिष्ठतीत्याखारेष्ठः । एतदुक्तं भवति । आहवनीयाख्ये खरे स्थितस्त्वं कृष्णमृगो यज्ञो भवसि अतोऽग्नये त्वा जुष्टमभिप्रेतमभिरुचितं प्रोक्षामि । वेदिं प्रोक्षति । "वेदिरसि" । "तद्यदेतेनेमां सर्वं समविन्दत तस्माद्वेदिर्नामेति " तां व्युत्पत्तिमङ्गीकृत्याह । "वेदि" स्त्व "मसि" अतो बर्हिषे त्वामभिरुचितां प्रोक्षामि । बर्हिः प्रोक्षति । बर्हिरसि" बर्हिस्त्वमसि । अतः स्रुग्भ्यस्त्वामभिरुचितं प्रोक्षामि ॥ १ ॥

का० ( २, ७, १९ ) इध्मं प्रोक्षति विस्रंस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति प्रतिमन्त्रमिति ॥ इध्मं विस्रंस्य प्रोक्षेत् । वेदिश्च प्रोक्षेत् । बर्हिरादाय वेद्यां पूर्वग्रन्थि कृत्वा प्रोक्षेत् क्रमान्मन्त्रत्रयेणेति सूत्रार्थः ॥ कृष्णोऽसि ॥ हे इध्म ! त्वं कृष्णोऽसि कृष्णमृगरूपो यज्ञोऽसि । इध्मपूलकस्य यज्ञसाधनत्वाद्यज्ञत्वोपचारः । किम्भूतः ! आखरेष्ठः । आ समन्तात् खरे कठिने वृक्षे तिष्ठतीति आखरेष्ठः । यद्वा खं स्वर्ग राति ददातीति ख-

रः आहवनीयस्तत्रा समन्तात्तिष्ठतीत्याखरेष्ठः । अन्तोदात्तः कृष्ण-शब्दो वर्णवाची अयन्तु कृष्णशब्द आद्युदात्तत्वान्मृगवाची ॥ यज्ञः कदाचिद्देवेभ्योऽपक्रान्तः स्वगोपनाय कृष्णमृगो भूत्वा वने यज्ञियतरुमध्ये प्रविश्य कुत्रचित्कठिने वृक्षे तस्थौ । तदेतदभिप्रेत्य कृष्ण आखरेष्ठ इति द्वयमुच्यते । यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचारेत्यादिश्रुतेः ( १, १, ४, १ ) । स्थे च भाषायामिति स्थे परपदे [ पा० ६, ३, २० ] भाषायां सप्तम्या अलुग्विधेधाद्वेदेऽलुक् । पूर्वपदादिति षत्वम् । अतोऽग्नये जुष्टं प्रियं त्वां प्रोक्षामि शुद्ध्यर्थं जलेनेति शेषः । वेदिरसीति वेदिं प्रोक्षति । त्वं वेदिरसि । विद्यते लभ्यत इति वेदिः । विदॢ लाभे । देवैरसुरेभ्यो लब्धत्वाद्वेदिः ! अतो बर्हिर्जुष्टां बर्हिषो धारणोपयोगितया प्रियां त्वां प्रोक्षामि । पृथ्वीरूपाया वेदेः प्रजारूपस्य बर्हिषो धारकत्व युक्तम् ॥ बर्हिरसीति बर्हिःप्रोक्षणम् । हे दर्भ ! त्वं बर्हिरसि प्रभूतत्वाद्वेदिवृंहणसमर्थमसि । अतः स्रुग्भ्यो जुष्टं स्रुचां धारणात् प्रियं त्वां प्रोक्षामि ॥ १ ॥

अदि॑त्यै॒ व्युन्द॑नमसि । विष्णो॑ स्तु॒पोऽसि । ऊर्ण॑म्रदसं त्वा स्तृणामि स्वास॒स्थां दे॒वेभ्यः॑ । भुव॑पतये॒ स्वाहा॑ । भुव॑नपतये॒ स्वाहा॑ । भू॒ताना॒ं पत॑ये॒ स्वाहा॑ ॥२॥

शेषं मूलेषूपसिञ्चति “ अदित्यै व्युन्दनमसि ” । इयं वै पृथिव्यदितिः । षष्ठ्यर्थे चतुर्थी । अदित्याः पृथिव्याः व्युन्दनम् । उन्दी क्लेदने । क्लेदनं सेचनं भवसि । उदकमुच्यते । प्रस्तरं गृह्णाति । “विष्णोस्तुपोऽसि”। विष्णोर्यज्ञस्य।स्तुपः।ष्टुचै स्त्यै शब्दसंघातयो स्त्यायतेः संघातः शिखा असि । वेदिं स्तृणाति । “ऊर्णम्रदसम्” ऊर्णामिव मृद्वीं त्वां कर्तुं स्तृणामि।स्तृञ् आच्छादने-आच्छादयामि। “स्वासस्थां” साधु मर्यादया यस्यामासीदन्ति सा तथोक्ता । तां त्वां स्तृणामि देवेभ्योऽर्थाय । स्कन्नमभिमृशति । “भुवनपतयेस्वाहा” । अस्याग्नेर्ये भ्रातरः पूर्वे त्रयो बभूवुः ते वषट्कारभयादिमां पृथिवीं प्राविशन् प्रविष्टाः, अयंचाग्निः प्र-

पलाय्याप्सु प्राविविक्षत् मवेष्टुमैक्षत् तं देवैरानीय स्वाधिकारे नियुज्यमानएवमुवाच एतैराग्निभिर्मा परिधत्त त एते परिधयः तेषां चायं भागः क्लृप्तोऽग्नीनाम् । भुवः शब्देन मध्यमा व्याहृतिरुच्यते, भुवनशब्देन जगदुच्यते, भूतानामितिशब्देन भूतान्ये वोच्यन्ते तेषां येऽधिपतयोऽग्नयस्तेभ्यः स्वाहेति सम्बन्धः ॥२॥

का० [ २, ७, २० ] शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमितीति ॥ हे प्रोक्षणशेषोदक ! त्वमदित्यै अदित्या भूम्याः व्युन्दनमसि विशेषेण क्लेदनमसि ॥ का० [ २, ७, २१ ] बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोःस्तूपोसीति । हे प्रस्तर ! दर्भमुष्टिरूप ! त्वं विष्णोर्यज्ञस्य स्तुपोऽसि । ष्टुञ् स्त्यै शब्दसङ्घातयोः । औणादिको डुपप्रत्ययः । दर्भसङ्घातरूपत्वात् केशसङ्घातरूपा शिखेव भवसि ॥ का० ( २, ७, २२ ) वेदिं स्तृणात्यूर्णम्रदसमितीति । हे वेदे ! त्वां स्तृणामि बर्हिषा छादयामि । किम्भूतां त्वाम् ? ऊर्णम्रदसमूर्णमिव मृदुतरामतिशयेन मृदुर्म्रदीयसी ईयलोपश्छान्दसः । यथा प्रभोरुपवेष्टुं भूमिः कम्बलादिनाच्छाद्यते काठिन्याभावाय तथा दर्भैराच्छादिता वेदिर्मृदुः स्यात् । पुनः किम्भूतां त्वां देवेभ्यः स्वासस्थां देवोपकाराय सुखेनासितुं स्थानभूताम् । सुखेन आसेनासनेन स्थीयते यस्यां सा स्वासस्था ताम् । का० स्कन्नमभिमृशति भुवपतये स्वाहेति ॥ एतन्मन्त्रत्रयस्यात्रोत्कर्षः । भुवपत्यादयस्त्रयोऽग्नेर्भ्रातरः । (स्वाहाशब्दो निपातो देवान् प्रति दानवाची । स्वाहाकारश्च वषट्कारश्च देवा उपजीवन्तीति श्रुतेः)। हविर्ग्रहकाले परिधिभ्यो बहिर्यद्धविः स्कन्नं तद्भुवपत्यादिभ्योऽग्नेर्भ्रातृभ्यो दत्तमिति मन्त्रार्थः । पुराग्नेर्भ्रातरो वषट्कारभयाद्भूमिं प्राविशंस्तद्दुःखेनाग्निरपि पलाय्योदके प्राविशत्ततो देवैरानीय स्वाधिकारे स्थाप्यमान एवमवदद् यदेतैर्मद्भ्रातृभिर्मा परिधत्तैषाञ्च यज्ञभागः कल्पतामिति । ततस्तेऽग्नेर्भ्रातरः परिधयो जातास्तेषाञ्च स्कन्नंहविर्भागः कृत इति कथा ( १, ३, १३—१६ ) २ ॥

गन्धर्वस्त्वा विश्वावसुः परि दधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । इन्द्रस्य

बाहुर॑सि दक्षि॑णो विश्व॑स्यारि॑ष्ट्यै यज॑मानस्य परि॑धिर॑स्यग्निरि॒ड ई॑डि॒तः । मि॒त्रावरु॑णौ त्वोत्तर॒तः परि॑धत्तां ध्रु॒वेण॒ धर्म॑णा विश्व॑स्यारि॑ष्ट्यै यज॑मानस्य परि॒धिर॑स्याग्निरि॒ड ई॑डि॒तः ॥ ३ ॥

परिधीन् परिदधाति। "गन्धर्वस्त्वा" परिधिरुच्यते गन्धर्वोविश्वावसुस्त्वां परिदधातु सर्वतः स्थापयतु "विश्वस्य" सर्वस्य "अरिष्ट्यै" अविनाशाय । रिषिरुषि हिंसायाम् । रिषतिः हिंसार्थः । सा तत्र प्रतिषिद्धा । किञ्च "यजमानस्य परिधिरासि" न केवलमाहवनीयस्य किन्तर्हि यजमानस्यापि परिधिरसि । किञ्च "अग्निरासि" आहवनीयस्य भ्राता । अतएवमुच्यते । "इडे" स्तोत्राय । होत्रभिप्रायमेतत् "इडितः" । इडस्तुतौ । स्तुत इत्यर्थः । दक्षिणं परिदधाति । "इन्द्रस्य बाहुरासि दक्षिणः" । इन्द्रस्य दक्षिणेन बाहुना परिधिरुपमीयते । व्याख्यातः शेपः । उत्तरं परिदधाति । 'मित्रावरुणौ त्वोत्तरतः' । मित्रावरुणौ वायवादित्यौ त्वाम् उत्तरतः सर्वतः परिधत्ताम् । "ध्रुवेण" अचलेन "धर्म्मणा" धारकेण । "विश्वस्यारिष्ट्या" इति व्याख्यातम् ॥ ३ ॥

का० ( २, ८, १ ) परिधीन् परिदधाति मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रमिति ॥ आदौ पश्चात् । हे परिधे ! विश्वावसुनामा गन्धर्वः त्वां परिदधातु आहवनीयस्य पश्चात्सर्वतः स्थापयतु । विश्वस्मिन् सर्वस्मिन् प्रदेशे वसतीति विश्वावसुः । द्युलोकस्थं सोम रक्षितुं तत्पार्श्वे सर्वत्र गन्धर्वोऽवसदिति श्रुत्यन्तरकथा । किमर्थं स्थापयतु । विश्वस्यारिष्ट्यै । रिष हिंसायां रेषणं रिष्टिः न रिष्टि अरिष्टिस्तस्यै । आहवनीयस्थानरूपस्य विश्वस्य हिंसापरिहाराय । परिध्यभावेऽसुराः प्रविश्य हिंसन्ति । किञ्च त्व यजमानस्य परिधिरसि । न केवलमग्ने परिधिः यजमानमप्यसुरेभ्यो

रक्षितुं पश्चिमादिशि स्थापितोऽसि । किञ्च अग्निरिडः ईडितश्चासि । आहवनीयस्य प्रथमो भ्राता भुवपतिनामाग्निरूपस्त्वमसि । ईड्यते स्तूयते इतीड स्तुतियोग्यः । अत एव ईडितः स्तुतो होत्रादिभिः । ईड स्तुतौ ॥ दक्षिणं परिधिं परिदधाति । इन्द्रस्य बाहुरसि । हे द्वितीय परिधे ! त्वमिन्द्रस्य दक्षिणो बाहुरसि । रक्षणसमर्थत्वादिन्द्र-बाहुत्वोपचारः । विश्वस्येत्यादि व्याख्यातम् । अत्राग्निशब्दे न भुवन-पतिनामा द्वितीयो भ्राता ॥ तृतीयमुत्तरं परिधिं परिदधाति ॥ मित्रावरुणौ । हे तृतीय परिधे ! मित्रावरुणौ वाय्वादित्यौ ध्रुवेण स्थिरेण धर्मणा धारणेन उत्तरस्यां दिशि त्वां परिधत्तां परित. स्थापयताम् । विश्वस्येत्यादि पूर्ववत् । अत्राग्निर्भूतानां पतिस्तृतीयो भ्राता॥३॥

वी॒तिहो॑त्रं त्वा कवे द्यु॒मन्त॒ꣳ समि॑धीमहि । अग्ने॑ बृ॒हन्त॑मध्व॒रे ॥ ४ ॥

आहवनीये इध्मकाष्ठमादधाति । "वीतिहोत्रम्" आग्नेयी गायत्री । "वीतिहोत्रम्" । वी गतिप्रजननकान्त्यशनखादनेषु । वीतिः अभिलाषः होतृकर्म्मणि यस्य स वीतिहोत्रः । अथवा विविधा इतिर्गतिर्होतृप्रशास्त्रादिषु होत्रासु यस्य स वीतिहोत्रः । हे भगवन्नग्नेवीतिहोत्रं त्वाम् । "कवे" क्रान्तदर्शन । अतीतानागतविप्रकृष्टविषयं युगपद्दर्शनं यस्य सः क्रान्तिदर्शनः । "द्युमन्तम्" दीप्तिमन्तम् "समिधीमहि" । इन्धी दीप्तौ । सन्दीपयामः । अनेन इध्मकाष्ठेन "बृहन्तं" महान्तम् "अध्वरे" यज्ञे ॥ ४ ॥

का० ( २, ८, २ ) प्रथमं परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधातीति । इयमृक् अग्निदेवत्या गायत्रीच्छन्दस्का । हे कवे ! क्रान्तदर्शिन् ! हे अग्ने ! अध्वरे यागे निमित्ते त्वां वय समिधीमहि अनेनेध्मकाष्ठेन दीपयामः । अतीतानागतदूरवर्तिपदार्थानां यस्य [illegible] । किम्भूतं त्वाम् । वीतिहोत्रम् । इण् गतौ । इतिर्गतिः व्याप्तिः पुत्रपौत्रपशुधनादिभिः समृद्धिरित्यर्थः । वीतये समृद्धौ होत्र होमो यस्य स वीतिहोत्रस्तं यत्र होमे कृते समृद्धिप्राप्तिः

स्यादित्यर्थः । यद्वा वीतिरभिलाषो होत्रे होतृकर्मणि यस्य तम् । तथा द्युमन्तं । द्यौः कान्तिरस्यास्तीति द्युमान् तं स्वत एव द्युत्युपेतम् । तथा बृहन्तम् महान्तम् ॥ ४ ॥

**स॒मिद॑सि । सूर्य॑स्त्वा पु॒रस्ता॑त् पातु॒ कस्या॑श्चिद॒भिश॑स्त्यै । स॒वि॒तुर्बा॒हू स्थः॑ । ऊर्ण॑म्रदसं त्वा स्तृणामि स्वास॒स्थं दे॒वेभ्यः॑ । आ त्वा॒ वस॑वो रु॒द्रा आ॑दि॒त्याः स॑दन्तु ॥ ५ ॥**

द्वितीयमादधाति । "समिदसि" । अङ्गप्रधानार्थस्याग्नेः "समिन्धनमसि" । समित् स्तूयते । आहवनीयमीक्षमाणो जपति । "सूर्यस्त्वापुरस्तात्पातु" । गोपायतु । गुप्त्यै वाभितः परिधयो भवन्ति । "अथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोतीति" श्रुतिः । "कस्याश्चिदभिशस्त्यै" । यः कश्चिदभिशापस्तस्मादित्यर्थः । अभिशस्त्या इति चतुर्थी षष्ठ्यर्थे । बर्हिषस्तृणे तिरश्ची निदधाति । "सवितुर्बाहूस्थः" । अनेन प्रस्तरस्य धारणकर्मणा युवां सवितुर्बाहू भवथः । तयोः प्रस्तरं स्तृणाति । "ऊर्णम्रदसम्" ऊर्णामिवमृदुं त्वां स्तृणामि । "स्वासस्थम्, देवेभ्यः" साधु अस्मिन्नासीदन्ति तिष्ठन्ति इति स्वासस्थः प्रस्तरः । देवेभ्य इति षष्ठ्यर्थे चतुर्थी देवानामिति यावत् । प्रस्तरमभिनिदधाति । "आत्वावसवः" । स्कन्दिरगतिशोषणयोः । आसदन्तु आसीदन्तु त्वां सवनदेवता वसवो रुद्रा आदित्याः ॥ ५ ॥

का० [ २, ८, ३ ] अनुपस्पृश्य द्वितीयं समिदसीतीति ॥ हे इध्मकाष्ठ ! त्व समिदसि अग्नेः समिन्धनं दीपनमसि ॥ का० (२, ८, ४,) सूर्यस्त्वेति जपत्याहवनीयमीक्षमाण इति ॥ हे आहवनीय सूर्य पुरस्तात्पूर्वस्यां दिशि कस्याश्चिदभिशस्त्यै सर्वस्या अभिशस्तेर्हिंसाया सकासात्त्वा त्वां पातु रक्षतु । चतुर्थी पञ्चम्यर्थे ! या काचिद्धिंसा प्रसक्ता तां सर्वां परिहरत्वित्यर्थः । इतरदिक्त्रये परिधित्रयं

रक्षकं पूर्वस्यां तदभावात् सूर्यः । तथा च श्रुतिः [ १, ३, ४, ८ ] गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोतीति । का० [ २, ८, ९ ] वर्हिषस्तृणे तिरश्ची निदधाति सवितुरितीति । तृणद्वयं प्रस्तरस्थापनार्थं तिर्यग् निदध्यात् । हे तृणे ! युवामुभे सवितुर्देवस्य बाहू स्थः । प्रस्तरधारणेन सूर्यस्य बाहू इव भवथः ॥ का० ( २, ८, १० ) तयोः प्रस्तरꣳ स्तृणात्यूर्णम्रदसमितीति । ऊर्णामिव मृदु देवेभ्यो देवानां स्वासस्थं सुखेनासनेन स्थीयते यत्र तादृशं त्वां स्तृणामि ॥ का० ( २, ८, ११ ) अभिविदधात्या त्वा वसव इतीति ॥ प्रस्तरं प्रति पाणी निदधाति । वसवो रुद्रा आदित्याः सवनत्रयाभिमानिनस्त्रयो देवाः त्वामासदन्तु आसादयन्तु सर्वतः प्रसारयन्तु ॥ ५ ॥

घृताच्यसि जुहूर्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद । घृताच्यस्युपभृन्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद । घृताच्यसि ध्रुवा नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद । प्रियेण धाम्ना प्रियꣳ सद आसीद । ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि । पाहि यज्ञम् । पाहि यज्ञपतिम् । पाहि मां यज्ञन्यम् ॥ ६ ॥

जुहूंनिदधाति । "घृताच्यसि" । अञ्चु गतिपूजनयोः । घृतमाश्रितं प्राप्तं यस्यां स्रुचि घृतं वा अच्यते यया स्रुचा सा घृताची । "जुहूर्नाम्ना" । क्रियाभिप्रायमेतत् । हूयते अनयेति जुहूः । "सेदंप्रियेणधाम्ने"ति तदः श्रवणाद्यदोऽध्याहारः । या त्वं घृताच्यसि जुहूश्च नाम्ना सा इदं प्रियं सदः स्थानम् आसीद अधितिष्ठ । प्रियेण धाम्ना सहिता । "एतद्वै देवानां प्रियं धाम यदाज्यमि" ति श्रुतिः । आज्यसहितेत्यर्थः । अथ वा धामानि भवन्ति स्थानानि नामानि जान्मानीतिवा । अस्मिन् पक्षे प्रियेण नाम्ना सहिता सतीति योज्यम् । उपभृतं सादयति ।

"घृताच्यस्युपभृन्नाम्ना" । उपभरणादुपभृत् । व्याख्यातमन्यत् । ध्रुवां सादयति । "घृताच्यसि ध्रुवानाम्ना" । ध्रुवा स्थिरा । व्याख्यातमन्यत् । अन्यद्धविः सादयति । "प्रियेण धाम्ना" । व्याख्यातमन्यत् । तानि हवींष्यभिमृशति । "ध्रुवा असदन्" । ता विष्णो पाहीति नदः सवन्धाद्यदोऽध्याहारः । यान्ये तानि ध्रुवाणि असदन् आसादितानि "ऋतस्य योनौ" यज्ञस्योत्सङ्गे "ता विष्णो" तानि हवींषि पाहि गोपाय । किञ्च "पाहि यज्ञम्" गोपाय यज्ञम् । किञ्च "पाहि यज्ञपतिं" यजमानम् । आत्मानमुपस्पृशति । "पाहिमाम्" अध्वर्युरात्मानं ब्रवीति । गोपाय माम् । "यज्ञन्यम्" यज्ञं नयतीति यज्ञनीः। गोपाय मां यज्ञस्य नेतारमित्यर्थः ॥ ६ ॥

का० [ २, ८, १२, १३ ] सव्याशून्ये जुहूं प्रतिगृह्य निदधाति घृताचीत्येवमितरे उत्तराभ्यां प्रतिमन्त्रमिति । हे जुहु ! त्व घृताची असि । घृतमञ्चति प्राप्नोतीति घृताची घृतपूर्णा भवसि नाम्ना च जुहूः । हूयतेऽनयेति जुहूः । क्विपि श्रुतिगमिजुहोतीनां द्वे च जुहोतेर्दीर्घश्चेति क्विव दीर्घश्च । सा त्व प्रियेण धाम्ना देवबल्लभेनाज्येन सह इद प्रिय सद. प्रस्तरलक्षणमासीद अधितिष्ठ । एतद्वै देवानां प्रियतम धाम यदाज्यमिति श्रुतेः ( २, ३, २, १७ ) प्रियधामशब्देनाज्यम । उपभृत सादयति । उप समीपे स्थित्वा बिभर्त्ति आज्यं धारयतीत्युपभृत् । व्याख्यातमन्यत् । ध्रुवां सादयति । ध्रुव स्थैर्ये । यथा होमार्थ जुहूपभृतोश्चलन तद्वदस्याश्चलनाभावेन स्थिरत्वान्नाम्ना ध्रुवा । अन्यद्व्याख्यानम् । का० ( २, ८, १९ ) प्रियेण धाम्नेति हवींष्यपि वेद्यां कृत्वेति । हे हविः । प्रियेण धाम्नाऽऽज्येन सह प्रियं सद आसीदेत्येकैक हविः सम्बोध्य वचनम् । का० ( २, ८, १९ ) ध्रुवा असदन्निति सर्वाण्यालभत इति । ऋतस्यावश्यम्भाविफलोपेतत्वेन सत्यस्य यज्ञस्य योनौ स्थाने ध्रुवाणि यानि हवींषि असदन्नतिष्ठन । हे विष्णो ! व्यापक यज्ञपुरुष ! ता तानि हवींषि पाहि रक्ष यज्ञ च पाहि यज्ञपतिं च पाहि । का० ( २, ८, २० ) पाहि मा-

मित्यात्मानमिति । यज्ञं नयतीति यज्ञनीः तं यज्ञन्यमध्वर्युं मां पाहि॥६॥

**अग्ने॑ वाजजिद्वाजं॑ त्वा सरि॒ष्यन्तं॑ वाज॒जित॒ꣳ सम्मा॑र्ज्मि । नमो॑ दे॒वेभ्यः॑ । स्व॒धा पि॒तृभ्यः॑ । सु॒यमे॑ मे भूयास्तम् ॥ ७ ॥**

अग्नेः संमार्गं करोति । 'अग्नेवाजजित्'' । हे भगवन्नग्ने वाजजिद् वाजस्यान्नस्य जेतः "वाजं त्वा सरिष्यन्तमि''ति । सृ गतौ । यज्ञं त्वां प्रापयिष्यन्तम् "वाजजितम्" । अन्नस्य जेतारं संमार्ज्मि । मृजूष् शुद्धौ । अञ्जलिं करोति । "नमोदेवेभ्यः" देवेभ्यो निन्हवः । दक्षिणत उत्तानं पाणिं करोति । "स्वधापितृभ्यः" । पितृभ्योनिन्हवः । जुहूपभृतावादत्ते । "सुयमेमे" । स्रुचावुच्येते । साधुयमे मे मम "भूयास्तं"भवतम्॥७॥

का० ( ३, १, १३ ) इध्मसन्नहनैरनुपरिधि सम्मार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामति । वाजमन्नं जयतीति वाजजित् । तत्सम्बुद्धौ हे वाजजित् ! हे अग्ने ! त्वामहं सम्मार्ज्मि शोधयामि । किम्भूतं त्वाम् । वाजं सरिष्यन्तमन्नमुद्दिश्य गमिष्यन्तमन्नसम्पादनोपयुक्तम् । तथा वाजजितमन्नमुद्दिश्य जयोपेतमन्नप्रतिबन्धनिवारकमित्यर्थः ॥ का० ( ३, १, १५ ) अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्य इतीति । ये देवा अनुष्ठानमनुगृह्णन्ति तेभ्यो नमस्करोति । का० ( ३, १, १५ ) स्वधा पितृभ्य इति दक्षिणत उत्तानमिति । प्राङ्मुखेनादौ देवनत्यर्थमञ्जलिः कृतः इदानीं पितृनत्यर्थं दाक्षिणामुख उत्तानमञ्जलिं कुर्यात् । ये पितरः पालकाः सन्ति तेभ्यः स्वधाऽस्तु । स्वधाशब्दो निपातः पितृनुद्दिश्य देयद्रव्यस्य दाने वर्त्तते । अतो यद्देयं तद्दास्याम इत्यर्थः । अनेन मन्त्रद्वयेन देवाः पितरश्चोपचर्यन्ते । का० ( ३, १, १६ ) सुयमे म इति जुहूपभृतावादायेति । हे जुहूपभृतौ ! मे मदर्थं सुयमे सुष्ठु नियते युवां भूयास्तं भवतम् । यथा युवयोः स्थितमाज्य न स्कन्दति तथा धारयतमित्यर्थः ॥ ७ ॥

**अस्क॑न्नम॒द्य दे॒वेभ्य॒ आज्य॒ꣳ सम्भ्रि॑यासम् । अङ्-**

ध्रिणा विष्णो मा त्वावंक्रामिषम् । वसुमतीमग्ने ते-
छायामुपंस्थेषं विष्णो स्थानंमसि । इत इन्द्रों वीर्यम-
कृणोदूर्ध्वोऽध्वर आस्थात् ॥ ८ ॥

यथाहं सुसंयताभ्यां स्रुग्भ्याम् अस्कन्नं सकलम् अद्य अस्मिन् कर्मणि देवेभ्योऽर्थाय "आज्यम्" आज्यशब्देन यज्ञो लक्ष्यते यज्ञं "संभृयासं" संबिभृयाम् । दक्षिणातिक्रामति। "अङ्घ्रिणाविष्णो" अङ्घ्रेर्गत्यर्थस्य अङ्घ्रिः पादः। पादेन "विष्णो" यज्ञ । "मात्वावक्रमिषम्" । माङ्लिुङ् मात्वामवाचीनं क्रमिषम् । "वसुमती"मित्यवस्थाय, वसुमतीं धनवतीम् हेभगवन्नग्ने ते तव "छायाम्" । छायाशब्द आश्रयवचनः । युष्माकं पादच्छायायां वसामीति यथा आश्रयम्, "उपस्थेषम्" उपतिष्ठेयम् । विष्णोर्यज्ञस्थानं भवासि । यज्ञस्य हेतत्स्थानं यत्र स्थितैर्यागः क्रियते यद् जुहोति । "इतइन्द्रः" इत अस्मात् यजतिस्थानाद् उत्थायेतिशेषः। इन्द्रो वीर्य" वीरस्य कर्म वीर्यम् "अकृणोत्" । कृञ् हिंसाकरणयोः । कृतवान् "अतोऽहीन्द्रास्तिष्ठन्दक्षिणतोनाष्ट्रारक्षांस्यपाहन्तीति" श्रुतिः । किञ्च "ऊर्ध्वोऽध्वर आस्थात्" यतश्च यजतिस्थानादूर्ध्वः प्रगुणः यज्ञः आस्थात् आस्थितः । अध्वर्युमुखयागाभिप्रायमेतत् ॥ ८ ॥

तथा सति अद्यास्मिन्ननुष्ठानदिने देवेभ्यो देवोपकारायाज्य युषयोः स्थितं घृतम् अस्कन्नं भूमौ यथा न स्कन्दति तथा सम्भ्रियासं सम्यक् पोषणं करोमि धारणं वा । आशीर्लिङि उत्तमे रूपम् ॥ का० ( ३, १, १६ ) दक्षिणातिक्रामत्यङ्घ्रिणा विष्णाविनीति । हे विष्णो ! व्यापक यज्ञपुरुष ! अङ्घ्रिणा पादेन त्वा त्वाम् अहं मा अवक्रमिषम् अवक्रमणं मा कार्षं पादेनातिक्रमणदोषो मे मा भूदित्यर्थः ॥ का० ( ३, १, १९ ) वसुमतीमित्यवस्थायेति । हे अग्ने ! ते तव छायां छायावत् समीपवर्त्तिनीं वसुमतीं भूमिम् अहमुपस्थेषम्

उपतिष्ठेयं सेवेय । उपपूर्वस्तिष्ठतिः सेवार्थे । स एव सेवाप्रकारः कथ्यते । हे वसुमति ! त्वं विष्णोर्यज्ञस्य स्थानमसि । अत्र स्थित्वा यागः कर्त्तुं शक्यते इत्यर्थः । आहवनीयसमीपवर्त्तित्वात् अस्या भूमेर्यज्ञस्थानत्वम् । यद्वा अयमर्थः । हे अग्ने ! ते तव वसुमतीं धनवतीं धनप्रातिकरीं छायामाश्रयम् उपस्थेयं सेवेय । छायाशब्द आश्रयवाचकः । युष्मत्पादच्छायायां वसामीति यावत् । यतस्त्वं विष्णोर्यज्ञस्य स्थानमसि ॥ का० ( ३, २, १ ) इत इन्द्र इति जुहोति । पूर्वे मन्त्रे यज्ञसम्बन्धि यत् स्थानमुक्तं तदेव देवानां विजयहेतुत्वादितः शब्देन परामृश्यते । देवयजनव्यतिरिक्तभूमेरसुराधीनत्वेन तत्र देवानां पराजयेऽपि यज्ञप्रदेशः पराजयरहित । तदेवोच्यते मन्त्रेण । इत इन्द्रः । इन्द्र इतोऽस्माद्देवयजनस्थानात् उद्युक्तः सन्निति शेषः । वीर्य्यमकृणोत् वीरस्य कर्म्म वीर्य्यं शत्रुबधरूपमकरोत् । अत एवाध्वरो यज्ञ ऊर्ध्वमास्थात् उन्नतः स्थितः । इन्द्रेण वीर्य्ये कृते शत्रुकृतविघ्नाभावादध्वरस्योन्नत्यम ॥ ८ ॥

अग्ने॒ वेर्हो॑त्रं॒ वेर्दू॒त्य॑म् । अव॑तां॒ त्वां॒ द्यावा॑पृथि॒वी । अव॒ त्वं द्यावा॑पृथि॒वी स्वि॑ष्ट॒कृद्दे॒वेभ्य॒ इन्द्र॒ आज्ये॑न ह॒विषा॑ भू॒त् स्वाहा॑ । संज्योति॑षा॒ ज्योतिः॑ ॥ ९ ॥

'अग्नेवेर्होत्रं वेर्दूत्यम्' हेअग्नेवेः । विद् ज्ञाने विद्धि जानीहि अवगतार्थो भव । मया होत्रं कर्त्तव्यम् । "वेर्दूत्यम्" । विद्धि च दूत्यं दूतस्य कर्म मया कर्त्तव्यम् । "उभयं वा एतदग्निर्देवानां होता च दूतश्चेति" श्रुतिः । "अवतां त्वा द्यावापृथिवी" । त्वां कर्मणि प्रवृत्तं पालयेतां द्यावापृथिव्यौ "स्विष्टकृत्" साधु इष्टं करोतीति स्विष्टकृत् देवेभ्योन्येभ्यः सकाशात् प्रथमम् । "इन्द्रआज्येन" अजगतिक्षेपणयोः । अजनेन हविषा हवनेन भूत् भूयात् । स्वाहा सुवाक् आह । "वाचे वा एतमाघारयतीन्द्रो वागित्युवाच आहु" रिति श्रुतिः । जुहाध्रुवां समनक्ति "संज्योतिषाज्योतिः" । सं गच्छतामित्य-

ध्याहारः । ज्योतिषा आज्येन ज्योतिः आज्यं सङ्गच्छताम् ॥९॥

तस्मात् हे अग्ने ! त्वं होत्र वेः । होतुः कर्म विद्धि । लङि अडभावे रूपम् । दूत्यं दूतकर्म च वेः विद्धि । होतृत्वं दूतत्वं चाग्नेः कर्म । तथा च श्रुतिः ( १, ४, ५, ४ ) उभयं वा एतदग्निर्देवानां होता च दूतश्चेति । ईदृशं त्वां द्यावापृथिवी अवतां पालयताम् । हे अग्ने ! त्वमपि द्यावापृथिवी लोकद्वयदेवते अव पालय । इत्थमन्योन्यपालने सति इन्द्रः आज्येन हविषास्माभिर्दत्तेन देवेभ्यो देवार्थं स्विष्टकृत् भूत् । सुष्ठु इष्टं करोतीति स्विष्टकृत् तादृशो भवतु । अडभावश्छान्दसः । यद्यदस्माभिरिज्यते तत्तदिष्टं सर्वं वैकल्यरहितं करोत्वित्यर्थः । स्वाहा सुहुतम् अस्तु । इन्द्रं देवमुद्दिश्य इदमाज्यं दत्तमित्यर्थः । स्वाहेति निपातो देवोद्देशेन दाने वर्त्तते । का० [ ३, २, २ ) जुह्वा ध्रुवां समनक्ति संज्योतिषेति । गच्छतामित्यध्याहारः । ज्योतिषा ध्रुवास्थिताज्यरूपज्योतिषा सह ज्योतिर्जुह्वासिच्यमानरूपं ज्योतिः सङ्गच्छताम् ॥ ९ ॥

**मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् । अस्माकं सन्त्वाशिषः सत्या नः सन्त्वाशिषः । उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयताम् । अग्निराग्नीध्रात् स्वाहा ॥ १० ॥**

यजमानो जपति "मयीदमिन्द्रः" । मयि इदम् इन्द्रः इन्द्रियं वीर्यम् । आधातु स्थापयतु । किञ्च "अस्मान् । रायः" धनानि "मघवानः" मघं धनं विद्यते येषां ते मघवानः धनिनः "सचन्ताम्" सेवन्ताम् । षचसेवने । एतदुक्तं भवति धनानि धनिनश्चास्मान् सेवन्ताम् । किञ्च अस्माकं सन्त्वाशिषः "सत्या" अवितथाः "नः" अस्माकं भवन्तु आशिषः । अग्नीन् प्राश्नाति । "उपहूता" अभ्यनुज्ञाता "पृथिवीमाता" जगतो निर्मात्री । "उपमां पृथिवी माता ह्वयताम्" । अभ्यनुजानातु मां पृथिवी माता भक्षणाय । अहं तु अग्निः सन् भक्षयामि ॥ १० ॥

का० ( ३, ४, २१ ) आशासने मयेदमिति यजमानो जपतीति । प्रधानयागानन्तरं पुरोडाशशेषप्राशनसमये होतरि आशिष प्रयुञ्जाने सति यजमानो जपति । इन्द्रः परमेश्वर इदमिन्द्रियं मयि दधातु । इदम् अस्मदपेक्षितम् इन्द्रियं वीर्य्यं मयि यजमाने स्थापयतु । किञ्च रायो धनानि दैवमानुषभेदेन द्विविधानि मघवानः धनवन्तश्चास्मान् यजमानान् सचन्तां सेवन्ताम् । सच सेवने । किञ्च अस्माकं यजमानानामाषिशोऽभीष्टार्थस्याशंसनानि सन्तु विद्यन्ताम् किञ्च नोऽस्माकमाशिषः पूर्वोक्ताः सत्या अवितथाः सन्तु । मघमिति धननाम (निघ० २, १०,) तद्विद्यते येषां ते मघवानः । अस्त्यर्थे वनुप्रत्यय. का० (३, ४, १८ १९, २०) एकैकमाहरति द्यावापृथिव्योरुपह्वाने ऽग्नीधे षडवत्तम् । प्राश्नात्युपहूता पृथिवीतीति ॥ यदा होता द्यावापृथिव्योरुपह्वानं करोति तदोभयोः पुरोडाशयोरेकैकमशं षडवत्ते षडवत्ते कृत्वाग्नीधे ददाति स चोपहूतेति मन्त्रेण तत् प्राश्नातीति सूत्रार्थः ॥ उपहूता येय पृथिवी दृश्यते सा जगतो माता निर्मात्री मयोपहूता अभ्यनुज्ञाता सा च पृथिवी माता मातृत्वेनास्माभिर्भाविता सती मामुपह्वयतामनुजानातु हविःशेषभक्षणायाज्ञां ददातु । अह चाग्नीध्रात् । अग्नीध इद कर्माग्नीध्र तस्माद्धेतोरग्निः सन् त भाग प्राश्नामीति शेषः । स्वाहा सुहुतमस्तु जाठरेऽग्नौ ॥ १० ॥

**उप॑हूतो॒ द्यौष्पि॒तोप॒ मां द्यौष्पि॒ता ह्व॑यताम॒ग्निरा॒ग्नीध्रा॒त् स्वाहा॑ । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । प्रति॑ गृ॒ह्णामि । अ॒ग्नेष्ट्वा॒स्ये॒न प्राश्ना॑मि ॥ ११ ॥**

अग्नीत् द्वितीयं प्राश्नाति । "उपहूतो द्यौः पिता" अभ्यनुज्ञातो द्यौः पिता पाता । "उपमां द्यौः पिताह्वयताम्" । उपहूयताम् अभ्यनुजानातु मां द्यौः पिता पाता । अहं तु "अग्निः" आग्नीध्रादिति समानम् । इत उत्तरं ब्रह्मत्वं प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोऽपश्यत् । प्राशित्रं गृह्णाति "देवस्यत्वेति" व्याख्यातम् । प्रति गृह्णामीत्युत्तमः पुरुषः । प्राश्ना-

ति । "अग्नेस्त्वास्येन" । अग्नेः संबन्धिना आस्येन मुखेन त्वां प्राशित्रं प्राश्नामि भक्षयामि ॥ ११ ॥

द्वितीय प्राश्नाति । एवं द्यौः पिता जगत्पालक उपह्वयतामित्यादि समानार्थम् । देवस्य त्वा । इतः प्रभृति ओं प्रतिष्ठेत्यन्तं ( ख० १३ ) ब्रह्मत्वम् । तस्याङ्गिरसो बृहस्पतिर्ऋषि का० [ २, २, १६ ) देवस्य त्वेति प्रतिगृह्णातीति ॥ ब्रह्मा देवस्य त्वेति प्राशित्रं गृह्णाति । मन्त्रो व्याख्यातः । प्रतिगृह्णामि स्वीकरोमीति शेषः । का० [ २, २. १८ ) अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्निति । हे प्राशित्र ! अग्नेः आस्येन वह्निदेवताया मुखेन त्वा त्वां प्राश्नामि भक्षयामि॥११॥

एतं ते देव सवितर्युज्ञं प्राहुर्बृहुस्पतये ब्रुह्मणे । तेन युज्ञमव तेन युज्ञपतिं तेन मामव ॥ १२ ॥

समिदामन्त्रितः प्रसौति । "एतं ते देव" । अध्वर्युराह ब्रह्मन् प्रस्थास्यामीति । एतं यज्ञं ते तव हे "देव" दानादिगुणयुक्त सवितः प्रसवितः प्राहुः । एकवचनस्य स्थाने बहुवचनम् । प्राह ब्रवीति । "तत्सवितारं प्रसवायोपधावतीति" श्रुतिः। किञ्च "बृहस्पतये ब्रह्मणे" प्राह बृहस्पतिर्वै देवानां ब्रह्मा तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति "तेन यज्ञमव" । तेन हेतुना यज्ञम् । अव पालय । तेन च "यज्ञपतिं यजमानं च पालय। तेन च "माम्" अव पालय ॥ १२ ॥

का० [ २, २, २१ ] एतं त इति समिदामन्त्रितः प्रसौतीति । समिधमाधातुमनुज्ञाप्रदानाय बोधितो ब्रह्मा मन्त्रेणानुजानीयात् । एत त इत्यादि ओम्प्रतिष्ठेत्यन्तो मन्त्र. । हे देव ! दानादिगुणयुक्त ! हे सवित ! प्रसवितः ! एतं यज्ञमिदानीं क्रियमाणमिम मख ते तुभ्यं त्वदर्थं प्राहुर्यजमानाः कथयन्ति अनुज्ञापयन्तीत्यर्थः । किञ्च त्वया प्रेरितो देवानां यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये च प्राहुः । बृहस्पतिर्वै देवानां ब्रह्मा । तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति । किञ्च । तेन हेतुना त्वदीयत्वेन यज्ञमव रक्ष । तथा तेनै

च हेतुना यज्ञपतिं यजमानं चाव रक्ष । तथा तेनैव हेतुना मां ब्रह्माणमव पालय ॥ १२ ॥

**मनो॑ जू॒तिर्जु॑षता॒माज्य॑स्य॒ बृह॒स्पति॑र्य॒ज्ञमि॒मं त॑नोतु । अरि॑ष्टं य॒ज्ञꣳ समि॒मं द॑धातु विश्वे॑ दे॒वास॑ इ॒ह मा॑दयन्ता॒मो३म्प्रति॑ष्ठ ॥ १३ ॥**

किञ्च "मनोजूतिर्जुषतामाज्यस्य" मनो जुषताम् । सेवताम् । अज्यस्य स्वमंशम् । कथंभूतं मनः जूतिः । जवतेर्गतिकर्मणो जूतिः । अतीतानागतवर्तमानेषु कालेषु पदार्थेषु यद्गन्तृ गच्छति । "किञ्च बृहस्पतिर्यज्ञमिमं तनोतु" विस्तारयतु "अरिष्टं यज्ञꣳ समिमं दधातु" । रिषतिर्हिंसार्थः । अरिष्टमविनष्टं यज्ञमिमं कृत्वा दधातु । इडाभक्षणेन हि यज्ञोविच्छिन्नः इत्यत एवमुच्यते । किञ्च "विश्वेदेवासः" देवा एव देवासः । 'आज्जसेरसुक्' सर्वे देवा इह कर्माणि मादयन्ताम् । मदी हर्षे । हर्षं कुर्वन्तु । स्वार्थिको णिच् । अवतेराप्नोतेर्वा । ओंकारः इहाभ्युपगमार्थः । "प्रतिष्ठ" प्रकर्षेण तिष्ठ ॥ १३ ॥

किञ्च । मनो आज्यस्य जुषताम् । कर्मणि षष्ठी । मनः घृतं सेवताम् । हे सवितः ! त्वदीयं चित्तं यज्ञसम्बन्धिन्याज्ये स्थापयेत्यर्थः । किम्भूतं मनः । जूतिः । जवतेर्गतिकर्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपातः । स्त्रीत्वं छान्दसम् । अतीतानागतवर्त्तमानकालगतपदार्थेषु गमनशीलं हि मनः । जवते शीघ्रं गच्छतीति जूति । किञ्च बृहस्पतिरिम यज्ञं तनोतु विस्तारयतु । ब्रह्मत्वात् । तत इमं यज्ञमरिष्टं हिंसारहितं कृत्वा सन्दधातु । इडाभक्षणेन हि मध्ये यज्ञो विच्छिन्न इत्येवमुच्यते । किञ्च विश्वे देवास. सर्वे देवा इह यज्ञकर्माणि मादयन्ताम् । मद तृप्तौ चुरादिः । तृप्यन्ताम् । एव प्रार्थितः सविता देवः ओम्प्रतिष्ठेत्यनुज्ञां प्रयच्छतु । ओमित्यङ्गीकारार्थः । तथास्तु । प्रतिष्ठ प्रयाणं कुरु । समिदाधानकाले यजमानस्याभिप्रेतं प्रयाणमवगम्य सविता देवोऽङ्गीकृत्य प्रयाणे प्रेरयतीत्यर्थः ॥ १३ ॥

एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि । अग्ने वाज-जिद्वाजं त्वा ससृवाꣳसं वाजजितꣳ सम्मार्ज्मि ॥ १४ ॥

"एषा ते अग्ने" इतः प्रभृति प्राकृतमार्षम् । आग्नेयी अनुष्टुप् समिदनुमन्त्रणे विनियुक्ता । हे भगवन्नग्ने एषा ते तव "समिन्धनम् । "तया" समिधा "वर्द्धस्व च आचप्यायस्व" । चकारो भिन्नक्रमः । आप्यायस्व च । वर्द्धमानाप्यायने समिधा कुर्वित्यर्थः । किञ्च त्वत्प्रसादाद्वयं "वर्द्धिषीमहि" । पुत्रपश्वादिभिः । "आचप्यासिषीमहि" । चकारो भिन्नक्रमः । आप्यासिषीमहि च । प्यायतेर्लिङि सीयुटि उत्तमपुरुषैकवचने एतद्रूपम् । तत्र सीयुटश्छान्दसोऽभ्यासः । अग्निं संमार्ष्टि । "अग्ने-वाजजित्" । "ससृवांसं" सृवन्तमितिविशेषः ॥ १४ ॥

का० ( ३, ५, २ ) एषा त इति होतानुमन्त्रयत इति । ब्रह्मत्वं समानम । अतः प्राकृतमार्षम् । इयमनुष्टुबग्निदेवत्या । हे अग्ने ! एषा ते तव समित् समिन्धनहेतुः काष्ठविशेषः तया समिधा त्वं वर्धस्व वृद्धिं गच्छ । आप्यायस्व च । अस्मानपि सर्वतो वृद्धिं प्रापय । तथा च सति त्वत् प्रसादाद्वय वर्द्धिषीमहि वृद्धिं प्राप्नुयाम प्यासिषीमहि च । अस्मदीयपुत्रपश्वादीन् सर्वतो वृद्धान् करवाम ॥ का० ( ३, ५, ४ ) सम्मार्ष्टि पूर्ववदग्निकामꣳसकृत्सकृत्ससृवाꣳस-मितीति । पूर्वमग्ने वाजजिदिति ( ख० ७ ) मन्त्रेण यथेध्मस्त्रहनैरग्नेः सम्मार्ग. कृतस्तथात्रापि सम्मार्ष्टि । तत्र परिक्रम्य त्रिस्त्रिः कृतः । अत्र तु परिक्रमणं विनैकैकवारमिति विशेष इति सूत्रार्थः । मन्त्रो व्याख्यातः । इयान् विशेष. । हे अग्ने ! त्वां सम्मार्ज्मि । किम्भूतं त्वां वाजं ससृवांसमन्नमुद्दिश्य गतवन्तमन्नं सम्पादितवन्तमित्यर्थः । अन्यत् पूर्ववत् ॥ १४ ॥

अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । अग्नीषोमौ तमपनुदतां योऽस्मान् द्वेष्टि य-

श्च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । इन्द्राग्नी तमपनुदतां योऽस्मान् द्वेष्टि यश्च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ॥ १५ ॥

जुहूपभृतौ व्यूहति । तत्र जुह्वायमानसंस्तवः अग्नीषोमयोः प्रधानदेवतयोः "उज्जितिमनु" ऊर्ध्वजयनमनु । "उज्जेषम्" उर्ध्वं जयेषम् । किञ्च "वाजस्य" अस्य पुरोडाशादेः। "मा" मां "प्रसवेन" अभ्यनुज्ञया कारणभूतया प्रोहामि प्रेरयामि । प्रकृतत्वादग्नीषोमयोरुज्जितिमनु हविषः प्रसवस्य कारणत्वेन विवक्षितत्वात् मामित्यात्मनः कर्मत्वं प्रोहामीतिकर्तृत्वं चोपपद्यते । उपभृतं प्रतीचीं प्रेरयति । "अग्नीषोमौ" प्रधानहविर्भोजौ "तं" शत्रुम् "अपनुदताम्" । णुद प्रेरणे । अपगमं नयताम् । "योऽस्मान्द्वेष्टि" । द्विष अप्रीतौ । योऽस्माभिर्न प्रीयते "यं च वयं द्विष्मः" । येन च वयं न प्रीयेमहि । किञ्च एवमग्नीषोमाभ्यामपनुद्यमानं शत्रुमन्नस्य "प्रसवेन अपोहामि" अपाञ्चं प्रेरयामि अधो नयामीत्यर्थः । उत्तरौ मन्त्रौ समानव्याख्यानौ ॥१५॥

का० [ ३, ५, १७, १८ ] जुहूपभृतौ व्यूहत्यग्नीषोमयोरितीति । तत्र जुहूं प्राचीं प्रेरयति यजमानः । व्यूहनं परस्परविपरीतत्वेनापनोदनम् । अग्नीषोमयोर्द्वितीयपुरोडाशदेवतयोरुज्जितिमनु अविघ्नेन हविःस्वीकाररूपमुत्कृष्टं जयमनुसृत्याहमुज्जेषमुत्कृष्टं जयं प्राप्तवानस्मि । वाजस्यान्नस्य पुरोडाशादेः प्रसवेनाभ्यनुज्ञया मां प्रोहामि मां यजमानं जुहूरूपधारिणं प्रोत्साहयामि । यद्यप्यूहति. धातुर्वितर्कार्थस्तथाप्युपसर्गवशादुत्साहार्थः । अन्यत् पूर्ववत् ॥ उपभृतं प्रतीचीं प्रेरयति । यः शत्रुरसुरादिरस्मादिरस्मान् द्वेष्टि अस्मदीययज्ञविनाशाय द्वेषं करोति । यं च वयं द्विष्मः । यमालस्यादिरूपमस्मदीयानुष्ठानविरोधिनं शत्रुं द्विष्मः विनाशायोद्योगं कुर्मः । तमुभयविधं शत्रुमग्नीषोमौ देवावपनुदताम् निराकुरुताम् ।

किञ्च । अहमप्येनं द्विविधं शत्रुमुपभृद्रूपं वाजस्य प्रसवेन पुरोडाशदेवताया अभ्यनुज्ञयापोहामि निराकरोमि । उत्तरौ मन्त्रौ दर्शदेवताविषयौ समानार्थौ ॥ १५ ॥

**वसुभ्यस्त्वा । रुद्रेभ्यस्त्वा । आदित्येभ्यस्त्वा । सञ्जानाथां द्यावापृथिवी । मित्रावरुणौ त्वा वृष्ट्यावताम् । व्यन्तु वयोऽक्तꣳ रिहाणाः । मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि ॥ १६ ॥**

परिधीननक्ति अध्वर्युः । "वसुभ्यस्त्वा" परिधिरुच्यते । "वसुभ्यो"र्थाय" त्वा"मनज्मि । "रुद्रेभ्योऽर्थायत्वामनज्मि "आदित्येभ्यो"र्थाय त्वामनज्मि । एतदुक्तं भवति । इत्थं भूता यूयं येन युष्मदभ्यञ्जनेन भवनदेवतानां तृप्तिः । प्रस्तरमादत्ते । "संजानाथाम्" । हेद्यावापृथिव्यौ युवां संजानाथाम् । अवगतार्थं भवतं युवाभ्यां वृष्टिर्दातव्येति । किञ्च "मित्रावरुणौ वां वृष्ट्यावताम्" । वायुर्वै वर्षस्येष्टे स चाध्यात्मम् । प्राणोदानभूतौ मित्रावरुणशब्दाभ्यामुच्यते । तद्योयं वायुरन्यात्मगतः स प्रस्तररूपापन्नं यजमानं त्वां वृष्ट्या अवतु पालयतु । "यजामानोवै प्रस्तर" इति श्रुतिः । अनक्ति । "व्यन्तुवय" इति । छन्दांस्यभिधीयन्ते गायत्र्यादीनि । वेतिर्गत्यर्थः ।व्यन्तु गच्छन्तु । वयोरूपाणि छन्दांसि प्रस्तरमादायेतिशेषः । "अक्तं"घृतमेव प्रस्तरं "रिहाणाः"लिहाना आस्वादयन्तः । नीचैर्हरति । "मरुतां पृषतीः" । बृहती प्रस्तरदेवत्या चतुर्थः पाद आग्नेयः । आहुतिपरिणामं त्रिभिः पादैराह । अन्तरिक्षस्थाना मरुतः तेषामादिष्टोपयोजनं पृषत्यो गावो वाहनं मरुतां सम्बन्धिनीः पृषतीर्ग-

च्छ । ततः अन्तरिक्षं तर्पयित्वा । वशा त्वं पृश्निर्भूत्वा दिवं गच्छ । "इयं वै वशा पृश्निर्यदिदमस्यां"मूलि चामूलश्चानाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरितिश्रुतिः । पृथिवीसम्बन्धिभिर्भोगैर्द्युलोकं तर्पयित्वा, इत्युक्तं भवति । "ततो नो वृष्टिमावह" । ततस्तस्मात् द्युलोकात् नः अस्माकं वृष्टिमावह । वृष्ट्या इमां पृथिवीं तर्पयेत्यर्थः । आत्मानमुपस्पृशति "चक्षुष्पाः" । हे भगवन्नग्ने यतस्त्वं चक्षुष्पा भवसि स्वरसप्रवृत्त्या "अतश्चक्षुर्मे पाहि" गोपाय ॥ १६ ॥

का० ( ३, ५, २४ ) जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रमिति । हे मध्यमपरिधे ! वसुभ्यः वसुदेवताप्रीत्यर्थं त्वा त्वामनज्मीति शेषः । एवं दक्षिणोत्तरपरिधिमन्त्रौ व्याख्येयौ । परिधित्रयाञ्जनेन सवनत्रयदेवताः प्रीयन्ते इति भावः ॥ का० [ ३, ६, ३ ] सञ्जानाथामिति प्रस्तरादानमिति । हे द्यावापृथिवी ! द्युलोकभूलोकदेव्यौ ! युवां सञ्जानाथां गृह्यमाणं प्रस्तरं सम्यगवगच्छतम् । किञ्च हे प्रस्तर ! मित्रावरुणौ प्राणापानवायू वृष्ट्या जलवर्षणेन त्वा त्वामवतां रक्षताम् । वायुर्वै वर्षस्येष्टे ( १, ८, ३, १२ ) इत्युक्तत्वाद्वर्षाधीशो वायुः स चाध्यात्मगतः प्राणोदानरूपो मित्रावरुणशब्दाभ्यामुच्यते । स च प्रस्तररूपं यजमानं वृष्ट्यावतु । यजमानो वै प्रस्तर इति श्रुतेः । ( १, ८, १, ४४ ) ॥ का० )३, ६, ४-७) अनक्त्येन व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्यामिति । इतरस्यां ध्रुवायाम् ॥ वयः पक्षिणः व्यन्तु । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । पक्षिरूपापन्नानि गायत्र्यादीनि छन्दांसि गच्छन्तु । प्रस्तरमादायेति शेषः । किम्भूताः वयः । अक्तं रिहाणाः । अक्तं घृतलिप्तप्रस्तरं लिहानाः आस्वादयन्तः । रलयोरैक्यम् ॥ का० ( ३, ६, ८ ) मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरतीति । एकं तृणं प्रस्तरात् पृथक्कृत्य प्रस्तरं नीचैर्हृत्वाग्नौ प्रक्षिपेदिति सूत्रार्थः । मरुतामिति प्रस्तरदेवत्या बृहती कपिदृष्टा चतुर्थः पाद आग्नेयः । हे प्रस्तर ! त्वं मरुतां पृषतीर्गच्छ मरुन्नामकानां सम्बन्धिनीः पृषतीर्वाहनरूपा अश्वाश्चित्रवर्णा गच्छ प्राप्नुहि ।

वायुवाहनवद्वेगेन गच्छेत्यर्थः । अन्तरिक्षं गच्छेत्यर्थः । वशा पृश्निर्भूत्वा । वशा स्वाधीना पृश्निरल्पतनुर्गौर्भूत्वा दिवं गच्छ । कामधेनुवत्तृप्तिकरी भूत्वा स्वर्गं गच्छेत्यर्थः । ततः स्वर्गप्राप्तेरनन्तरं नोऽस्मदर्थे वृष्टिमावह भूलोके वृष्टिमानय । यद्वा । इयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेय वशा पृश्निरिति श्रुतेर्वशापृश्निशब्देन भूमिरुच्यते (१, ८, ३, १५) । वशा पृश्निर्भूत्वा पृथिवी भूत्वा दिवं गच्छ पृथिवीसम्बन्धिभागानादाय द्युलोकं तर्पयेत्यर्थः । हे प्रस्तर ! त्वमन्तरिक्षं गत्वा तत्रस्थान्मरुतः सवाहनान् सन्तर्प्य स्वर्गं गत्वा देवांश्च सन्तर्प्य पृथिव्यां वृष्टिं कुर्वित्याहुतिपरिणामः सूचित इति भाव ॥ का० (३, ६, १५) चक्षुष्पा इत्यात्मानमालभत इति । हे अग्ने ! त्वं यतश्चक्षुष्पा असि । चक्षुः पातीति चक्षुष्पा । ज्वालयान्धकारं निवर्त्य चक्षुःपालकोऽसि । अतो मे मम चक्षुः पाहि पालय प्रस्तरप्रहणप्रसक्तं चक्षुष उपद्रवं परिहरेत्यर्थः ॥ १६ ॥

यं प॑रि॒धिं प॒र्यध॑त्था॒ अग्ने॑ देव प॒णिभि॒र्गुह्य॑मानः । तं त॑ ए॒तमनु॒ जोषं॑ भराम्ये॒ष नेत्त्वद॑प॒चे॒तया॑तै । अ॒ग्नेः प्रि॒यं पाथोऽपी॑तम् ॥ १७ ॥

परिधीननुहरति "यं परिधिम्" । त्रिष्टुब्विराड्रूपा यजुरन्ता अग्नेः प्रियमितियजुः । आहवनीयोऽग्निरभिधीयते । हे आहवनीय यं परिधिं "पर्यधत्थाः" । परिहितवानसि । "अग्नेदेव" । "पणेभि"रसुरैः प्रतिपक्षभूतैः "गुह्यमानः" । गुहू संवरणे । संध्रियमाणः अवरुह्यमानः । "तन्त एतम्" । तमेतं परिधिं ते तव "अनुजोषं भरामि" । अनुरुपसर्गः भिन्नक्रमः । भरामीत्येतेन संबध्यते । 'हृग्रहोर्भश्छन्दसि' हस्येति हकारस्य भकारः । अनुहरामि "जोष"मभिप्रेतम् । तथाच श्रुतिः । "वायुरेवाग्निः तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोति अथैतमेवाप्यैतीति" । एतत्सङ्गमात्प्रीतो भवति । "एषनेत्त्वदपचेतयातै" । एष

परिधिः । न इत् नेत् निपातसमाहारः परिभवार्थः । त्वत् त्वत्तः सकाशात् अपचेतयातै । आशङ्कायां पञ्चमो लकारः । चिती संज्ञाने । अपचेतयतु । एतदुक्तं भवति । एष परिधिर्मा कथञ्चि-त्वत्तो वियुक्तः सन् मास्मान्विगतचेतस्कान् कुर्यात् । मास्मान्वि-मनस्कान् करोतु । इतरावनुसमस्यति । "अग्नेः प्रियम्" । अग्नेः सम्बन्धि प्रियं "पाथः" पाथ इत्यन्ननाम अभिप्रेतमन्नम् "अपीत-म्" अपिगच्छतम् ॥ १७ ॥

का० ( ३, ६, १७ ) परिधीननुप्रहरति यं परिधिमिति प्रथम-मिति । एकादशिनस्त्रयोऽष्टकश्च विराड्रूपः । प्रथमोऽष्टक । यं परिधिम् । त्रिष्टुब् विराड्रूपा आग्नेयी यजुरन्ता अग्नेः प्रियमिति यजु. । देवलदृष्टा ॥ हे अग्ने देव ! आहवनीय ! पणिभिरसुरै गु-ष्यमान. । गुह्य सवरणं सत्रियमाण. मन्यमान. सन् त्व य परि-धि पश्चिमदिशि पर्यधत्थाः । असुरापद्रवनिवारणाय परिहितवा-नसि स्थापितवानसि । ते तव जोष प्रिय तमेत परिधिमनु भरा-मि वह्नौ प्रक्षिपामि । अनुर्मिश्रक्रम. । हरतेर्हस्य भ । एष परिधिः त्वत् त्वत्तः सकाशात् न । इत् एवार्थे नेव अपचेतयातै । मा अ-पचेतयतु । त्वत्तोऽपगन्तुं मा जानात्वित्यर्थ. । त्वय्येव तिष्ठतु । चि-ती संज्ञाने णिजन्ताल्लेट् । तस्यात्मनेपद, प्रथमैकवचनं तान्तम् । टित आत्मनेपदानामिति तस्यैकार । वैतोऽन्यत्रेति लेडकारस्य पाक्षिक ऐ । लेटोऽडाटावित्याडागम गुणायादेशौ । अपपूर्वः अप-चेतयातै । अपचेतयतु । एष परिधिस्त्वत्तोऽपगतचित्तो मास्त्वि-त्यर्थः ॥ का० ( ३, ६, १७ ) इतरौ च युगपदग्ने प्रियमितीति । द-क्षिणोत्तरौ परिधी युगपत् प्रक्षिपेत । हे परिधी ! अग्नेः प्रियं पा-थः युवामपीतमपिगच्छतम् । पाथ इत्यन्ननाम । [ नि० नै० ६, ७ ] । आहवनीयस्याभिप्रेतमन्नमपिगच्छतम् । अग्नेरन्नत्व भवद्भ्यां प्रा-प्यतामित्यर्थः ॥ १७ ॥

स॒ꣳस्र॒वभा॑गा स्थे॒षा बृ॒हन्तः॑ प्रस्त॒रे॒ष्ठाः प॑रि॒धेया॑श्च दे॒वाः । इ॒मां वाच॑म॒भि विश्वे॑ गृ॒णन्त॑ आ॒सद्या॒स्मिन्

बर्हिषि मादयध्वम् । स्वाहा वाट् ॥ १८ ॥

जुहूपभृद्भ्यां संस्रवान् जुहोति "सꣳस्रवभागाः" । वैश्वदेवी त्रिष्टुप् यजुरन्ता । स्वाहा वाडिति यजुः । संस्रवः भागो येषां ते संस्रवभागाः विश्वेदेवाः । यद्यपि यूयं संस्रवभागाः "स्थ" भवथ तथापि "इषा" अन्नेन संस्रवलक्षणेन बृहन्तो महान्तः । किञ्च "ये च प्रस्तरेष्ठाः" प्रस्तरस्थायिनः ये च "परिधेयाः" परिधिभवा देवास्तानुपशब्दं प्रत्यक्षीकृत्य ब्रवीमि "इमां" मदीयां "वाचम्" । "अभिगृणन्तः" अभिष्टुवन्तः । "विश्वे" सर्वे "आसद्य" स्थित्वा "अस्मिन्बर्हिषि" "मादयध्वम्" तृप्यध्वम् मोदयध्वं वा । "स्वाहा" । व्याख्यातम् । "वाट्" वषट्कारः परोक्षम् ॥ १८ ॥

का० ( ३, ६, १८ ) सꣳस्रवभागा इति सꣳस्रवान् जुहोतीति वैश्वदेवी त्रिष्टुब्यजुरन्ता । स्वाहा वाडिति यजुः । सोमशुष्म ऋषिः । हे विश्वे देवाः । यूयं संस्रवभागाः स्थ । विलीनमाज्यं सस्रवः । स एव भागो येषां ते सस्रवभागाः । तथाविधा भवथ । तथा इषा संस्रवलक्षणेनान्नेन बृहन्तो महान्तः स्थ । किञ्च ये प्रस्तरेष्ठाः प्रस्तरे तिष्ठन्तीति प्रस्तरेष्ठाः प्रस्तरस्थायिनः । ये च परिधेयाः परिधिभवाः सन्ति । ते विश्वे देवा इमां मदीयां वाचमभिगृणन्तः सर्वत्र वर्णयन्तः । अयं यजमानः सम्यग् यजतीत्येवं सर्वेषां देवानां मध्ये कथयन्तो यूयमस्मिन् बर्हिषि यज्ञे आसद्योपविश्य मादयध्वं तृप्यध्वं मोदयध्वं वा । स्वाहेति वाडिति च शब्दौ हविर्दानार्थौ । सर्वथा दत्तमित्यादरं दर्शयितुं शब्दद्वयप्रयोगः । यद्यपि स्वाहाकारेण वा वषट्कारेण वेति श्रुतेर्वषट्कारो दानार्थः । तथापि देवानां परोक्षप्रियत्वात् प्रत्यक्षत्वपरिहाराय वाडिति शब्दः प्रयुक्तः ॥ १८ ॥

घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम् । यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व ॥ १९ ॥

'घृताची''इति धुरि स्रुचौ निदधाति । घृतमश्नुति ययोस्ते घृताच्याविति प्राप्ते घृताची इति पूर्वसवर्णदीर्घादेशः । ये युवां घृताञ्चने स्थः । ते ब्रवीमि''धुर्यौ'' धुरि भवौ धुर्याव-नड्वाहौ तौ पातं गोपायतम् । किञ्च ''सुम्नेस्थः'' सुम्नमिति सुखनाम । यस्मात्सुखरूपे भवथः तस्मात्सुम्ने सुखे । ''मा'' माम् ''धत्तम्'' स्थापयतम् । ''यज्ञ नम श्चते'' इति वेदिमालभते यजमानः । सूर्यः पवमान् कृपिरुद्दालवान् धनान्तवानित्येते ऋषयोऽस्य यजुषो, यज्ञो देवता । हे यज्ञ नमश्च ते नमोऽस्तु ते नमस्कारश्चास्तु ते तुभ्यम् । स यदतिरेचयति तन्नमस्कारेण शमयति । ''उपच'' उपचयश्च तेऽस्तु । ''अथ यदूनं करोत्युप-चेति तेन तदन्यूनं भवतीति '' श्रुतिः । ''यज्ञस्य शिवे संति-ष्ठस्व'' । यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवं तेन तदुभयं शम-यति । ''स्विष्टे मे सन्तिष्ठस्व'' । साधु इष्टं स्विष्टं तस्मिन् मे मम सन्तिष्ठस्व समाप्तिं याहि ॥ १९ ॥

का० [ ३, ६, १९ ] घृताची इति धुरि निदधातीति । जुहूपभृ-तौ शकटधुरि निदध्यात् । हे जुहूपभृतौ ! युवां घृताची स्थः । घृ-तमश्नुतः प्राप्नुत' इति घृताच्यौ । पूर्वसवर्णदीर्घः ! तथाविधे यु-वां धुर्यावनड्वाहौ पातं रक्षतं धुरं वहतस्तौ धुर्य्यौ किञ्च युवां सु-म्ने सुखरूपे स्थ भवथ तस्मात् सुम्ने सुखे मा मां धत्त स्थापयत-म् ॥ का० ( ३, ६, २१ ) यज्ञ ! नमश्च त इति वेदिमालभत इति । अस्य मन्त्रस्य सूर्यः पवमान् कृपिरुद्दालवान् धनान्तवानिति पञ्च ऋषयः । यज्ञो देवता । हे यज्ञ । ते तुभ्यं नमः अस्तु उप उपचयो वृद्धिश्च तेऽस्तु । चकारावन्योन्यसमुच्चयार्थौ । नम उपशब्दाभ्यां यज्ञस्य यदतिरिक्तं यच्च न्यून जातं तत् पूर्णं जायते । तथा च श्रु-तिः । स यदतिरेचयति तन्नमस्कारेण शमयति अथ यदूनं करो-त्युप चेति तेन तदन्यूनं भवतीति । किञ्च ! यज्ञस्य शिवे स-न्तिष्ठस्व अन्यूनातिरिक्तं यज्ञं कुर्वित्यर्थः । यद्वै यज्ञस्यान्यूनातिरि-

कं तदेतद्द्वयं तेन तदुभयं शमयतीति श्रुतेः । मे मम स्विष्टे सन्ति ष्ठस्व । साधु इष्ट स्विष्टम् । शोभने यागे तिष्ठस्व प्राप्तिं कुर्वित्यर्थः ॥ १९. ॥

**अग्ने॑ऽदब्धायो॒ऽशीतम॒ पाहि मा॑ दि॒द्योः । पा॒हि प्रसि॑त्यै । पा॒हि दुरि॑ष्ट्यै । पा॒हि दु॑रद्म॒न्या अवि॒षं नः॑ पि॒तुं कृ॑णु । सु॒षदा॒ योनौ॒ स्वाहा॒ वाट् । अ॒ग्नये॑ संवे॒शप॑तये॒ स्वाहा॑ । सर॑स्वत्यै य॒शो॒भ॒गि॒न्यै॒ स्वाहा॑ ॥२०॥**

स्रुक् स्रुवं प्रतिगृह्णाति । “अग्नेऽदब्धायो” । गार्हपत्योऽग्निरुच्यते । हे भगवन्नग्ने अदब्धायो दभ्नोतिर्हिंसाकर्मा । आयुरितिमनुष्यनाम । अदब्धः अनवखण्डित आयुर्मनुष्यो यजमानो यस्य स तथोक्तः । तस्य संबोधनम् अदब्धायो । यद्वा अग्निरेव अनवखण्डितायुः । अस्मिन् पक्षे छान्दसी पुंल्लिङ्गता । “अशीतम” अश भोजने । अशू व्याप्तौ । एतौ धातू सन्दिह्येते । अशीतम अतिशयेन भोक्तः । अतिशयेन व्यापक । अशीतमेति दीर्घत्वं छान्दसम् । एवं स्तुत्वा याचते । “पाहि मा दिद्योः” । दिद्युदिति वज्रनाम । गोपाय मां दिद्युतः । “पाहि प्रसित्यै” प्रसितिः प्रसयनात्तन्तुर्वा जालं वा । पाहि मां बन्धनात् । “पाहि दुरिष्ट्यै” । दुर्यागात् पाहि । “पाहि दुरद्मन्यै” अद्मेत्यन्ननाम पाहि दुर्भोजनात् । भीत्रार्थानां भयहेतुरिति सर्वाश्चतुर्थ्यः पञ्चम्यर्थे । “अविषं नः पितुं कृणु” पितुरित्यन्ननाम । विषरहितमन्नमस्माकं कुरु । “सुषदा योनौ” । योनिरिति गृहनाम । साधु सदने गृहे स्थितानामस्माकमेतद्भवतु । “स्वाहा वाडि”ति व्याख्यातम् । दक्षिणाग्नौ जुहोति । “अग्नये संवेशपतये” । स्त्रीपुंसयोरभिलापपूर्वकमेकत्र शयनं संवेशः । तस्य पतिः संवेशपतिः तस्मै । “सरस्वत्यै यशोभगिन्यै” ।

जीवतः प्रशंसा यशः । भगिनीति संबन्धिशब्दः स्वसेत्युच्यते ॥ २० ॥

का० ( ३, ७, १७ ) स्रुक् स्रुवं प्रगृह्णात्यग्नेऽदब्धायविति । दभ्नोतिः हिंसाकर्मा ( निघ० २, १९, १ ) । आयुरिति मनुष्यनाम निघ० २, ३, १७ ) । अदब्धोऽनुपहिंसित आयुर्मनुष्यो यजमानो यस्य सोऽदब्धायु । अश भोजने।अश्नाति भुङ्क्ते इत्यशी। यद्वा अश्लृ व्याप्तौ अश्नुते व्याप्नोतीत्यशी । अतिशयेनाशी अशीतम । दीर्घश्छान्दसः । हे अदब्धायो । अहिंसितयजमान ! हे अशीतम ! भोक्तृतम । यद्वा व्यापकतम ! हे अग्ने गार्हपत्य ! मा मां दिद्योः वज्रात्पाहि । शत्रुप्रयुक्ताद्वज्रसमादायुधान्मांपाहि । दिद्युरिति वज्रनाम [ निघ० २, २०, १ ] । प्रसित्यै प्रसितेर्बन्धनहेतुभूताज्जालान्मां पाहि । प्रसितिः प्रसयनात्तन्तुर्वा जालं वेति यास्कः ( निरु० ६, १२) । दुष्टा इष्टिर्दुरिष्टि· अशास्त्रीयो याग' । तस्मान्मां पाहि । दुरद्मनी । अदनमद्मनी । दुष्टा अद्मनी दुरद्मनी दुर्भोजनं ततो मां पाहि । चतुर्थ्यर्थः पञ्चम्यर्थे । भीत्रार्थानामिति पञ्चमी । किञ्च नोऽस्माकं पितुमन्नमविषं कृणु हविर्विषरहितं कुरु । योनिरिति गृहनाम । ( निघ० ३, ४ ) । सुष्ठु सद्यते स्थीयते यस्यां सा सुषदा । तस्यां सुषदा विभक्तेराकारः । सम्यगवस्थानयोग्ये गृहे मां स्थापयेति शेषः । यद्वा गृहे स्थितानां नोऽस्माकं पितुमविषं कुरु । स्वाहा वाडिति पदे व्याख्याते । का० ( ३, ७, १८ ) दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति चेति । स्त्रीपुंसयोरभिलापपूर्वकमेकत्र शयनं संवेशः । तस्य पतिर्योऽग्निस्तस्मै स्वाहा हविर्दत्तम् । जीवत· पुरुषस्य प्रशंसा यशः तस्य यशसो भगिनी वाग्रूपा सरस्वती तस्यै हविर्दत्तम् ॥२०॥

वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः । देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः॥२१॥

पत्नी वेदं प्रमुञ्चति । "वेदोऽसीति" । विद ज्ञाने । वेदिता त्वमसि । यो ह्युपग्रहः स सन्निकर्षाद्यज्ञं जानाति । यतस्त्वं

वेदोऽसि अतस्त्वां ब्रवीमि । येन कारणेन त्वं देव वेद "देवेभ्यो" देवानामिति विभक्तिव्यत्ययः । "वेदः अभवः" भूतः तेनैव कारणेन मह्यं मम वेदो भूयाः भवेः । समिष्टयजुर्जुहोति । "देवा गातुविदः" इति । विराडियं विंशदक्षरा । अस्याः पूर्वेणार्द्धेन देवतां व्यवसृजति । हे "देवा गातुविदः" । गातुरिति यज्ञनाम । यज्ञविदः । युष्मत्प्रसादात्तथा भवतु यथा आगामिनं "गातुं" यज्ञं "वित्वा" विदित्वा । "गातुमित" ततोऽर्वाक्कालं यज्ञमित आगच्छत । यज्ञपरम्परानुच्छिन्नागमना यूयं भवतेत्यर्थः। एवं देवान् यथापथं विसृज्य अथेदानीं मनसस्पतिमाह हे मनसस्पते" मनसोऽधिपतिश्चन्द्रमाः हे चन्द्रमः इमं यज्ञं देव "वाते धाः" धारय । वाते हि यज्ञोऽवतिष्ठते। तथाच श्रुतिः । वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति ॥२१॥

का० [ ३, ८, १ ] पत्नी वेद प्रमुञ्चति वेदोऽसीति । हे कुशमुष्टिनिर्मित पदार्थ ! त्व वेदोऽसि । ऋगाद्यात्मकोऽसि । यद्वा वेत्तीति वेदः ज्ञातासि । हे देव ! द्योतनात्मक वेद ! हे वेद ! येन कारणेन त्व देवेभ्यः । षष्ठ्यर्थे चतुर्थी । देवानां वेदोऽभवः ज्ञापकोऽभूः तेन कारणेन मह्य मम वेदो भूया· ज्ञापको भव ॥ का० ( ३, ८, ४ ) समिष्टयजुर्जुहोति देवा गातुविद इतीति । इयं विराट्छन्दस्का वातदेवत्या मनसस्पतिदृष्टा ऋक । अस्याः पूर्वार्धेन देवता विसृजति । गै शब्दे । गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यते इति गातुर्यज्ञः त विदन्ति जानन्तीति गातुविदः। हे गातुविदः ! यज्ञवेत्तारो देवा· ! गातुं वित्वा विदित्वा । विद ज्ञाने । अस्मदीयो यज्ञ· प्रवृत्त इति ज्ञात्वा । गातुमित यज्ञ प्रत्य।गच्छत ! यद्वा गातुर्गन्तव्यो मार्गः त गच्छत । अस्मदीययज्ञेन तुष्टाः सन्तः स्वमार्ग गच्छत । एव देवान् विसृज्य चन्द्रं प्रत्याह । हे मनसस्पते । मनोऽधिपश्चन्द्र· । यद्वा देवान् यष्टुं मनसः प्रवर्त्तकः परमेश्वरः । तं प्रत्युच्यते । हे मनसस्पते ! परमेश्वर ! हे देव ! इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते ददामि । त्वं च तं यज्ञं वाते वायुरूपे देवे धाः

स्थापय । वाते हि यज्ञोऽवतिष्ठते । तदुक्तं श्रुत्या । वायुरेवाग्निस्त-स्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति ॥ २१ ॥

सम्बर्हिरङ्क्ताᳬं हविषा घृतेन समादित्यैर्वसुभिः समरुद्भिः । समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा ॥ २२ ॥

बर्हिर्जुहोति । "संबर्हिरङ्क्ताम्" । बर्हिर्देवत्या विराड्रूपा त्रिष्टुप् । संबर्हिरङ्क्ताम् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । बर्हिरिति द्वितीया । समङ्क्तां बर्हिः, क, इन्द्र इत्युपरिष्टात् श्रूयते स इहाभिसम्बध्यते । इन्द्रः समङ्क्तां बर्हिः । केन "हविषा घृतेन" कैः सहितः समङ्क्तात् । "आदित्यैर्वसुभिर्मरुद्भिः विश्वैर्देवैः" सहित इन्द्रो बर्हिः समङ्क्ताम् । तच्चाक्तं सत् दिव्यं नभो गच्छतु । यद्दिव्यं दिवि भवं नभः । नभ इत्यादित्यनाम । आदित्यलक्षणं ज्योतिस्तद्गच्छतु ॥ २२ ॥

का० ( ३, ८, ५ ) बर्हिः सम्बर्हिरितीति । बर्हिर्जुहोति । इयमृक् त्रिष्टुप् विराड्रूपा बर्हिर्देवत्या । इन्द्रो हविषा हविःसंस्कारयुक्तेन घृतेन बर्हिः दर्भं समङ्क्ताम् । सम्यगञ्जनोपेतं करोतु स चेन्द्रः केवलो न । किन्तु आदित्यैर्वसुभिर्मरुद्भिः विश्वदेवेभिर्विश्वनामकैश्च गणदेवैः सहितः समङ्क्ताम् । समित्यस्योपसर्गस्यावृत्त्या अङ्क्तामित्यस्य क्रियापदस्याप्यावृत्तिर्बोद्धव्या । वस्वादिसहितेनेन्द्रेण समङ्क्तां तद् बर्हिर्यद्दिव्यं नभो आदित्यलक्षणं ज्योतिः तद् गच्छतु आदित्यं प्राप्नोतु । स्वाहा इदं बर्हिर्देवोद्देशेन दत्तम् । नभः इत्यादित्यनामसु ( निघ० १, ४ ) पठितं । दिवि भवं दिव्यम् ॥ २२ ॥

कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति । पोषाय ॥ रक्षसां भागोऽसि ॥ २३ ॥

वेद्यां प्रणीतां निनयति । "कस्त्वाविमुञ्चति" व्याख्यात-

म्। अयं तु विशेषः। तत्र यज्ञं युनक्ति इह तु विमुञ्चति। "पोषाय" यजमानस्य पोषाय निनयामीति शेषः। कणानपास्यति। "रक्षसा भागोऽसी"ति। निगदव्याख्यातम् ॥ २३ ॥

का० ( ३, ८, ६ ) वेद्यां प्रणीता निनयति परीत्य कस्त्वेति। व्याख्यात. [ अध्या० १, ६ ) मन्त्रः प्रजापतिर्देवतः तत्र यज्ञयोगे नियुक्तः अत्र तु यज्ञविमोके। पोषाय यजमान पुत्रादिभिः पोषयितु त्वां निनयामीति शेषः। यज्ञ प्रयुज्याविमोके यजमानस्याप्रतिष्ठापत्तेर्विमोक' कार्य्यः। यो वै यज्ञ प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवतीति श्रुत्यन्तरवचनात् ॥ का० ( ३, ८, ७ ) पुरोडाशकपालेन कणानपास्यत्यध. कृष्णाजिनं रक्षसांमिनीति। हे कण समूह! त्व रक्षसां भागोऽसि तेषां नीचजातित्वान्निकृष्टकणरूपो भागो युक्त. ॥ २३ ॥

संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन। त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ २४ ॥

इत उत्तरं याजमानं, पूर्णपात्रम्प्रतिगृह्णाति। "संवर्चसेति"त्वाष्ट्री त्रिष्टुप्। समित्युपसर्गः अगन्महीत्याख्यातेन सम्बध्यते। समगन्महि। "ब्रह्मवर्चसा" ब्रह्मवर्चसेन। "पयसा" गोभिः "तनूभिः" भार्यापुत्रादिभिः। "मनसा" च 'शिवेन" शान्तेन। यज्ञमुपगच्छतः पुरुषस्य सर्वमेवैतदुपैति वर्च आदि अतोऽनेन पुनराप्याययति। किञ्च "त्वष्टा सुदत्रः" कल्याणदानः विदधातु "रायो" धनानि। किञ्च "अनुमार्ष्टु" शुन्धयतु "तन्वः" शरीरस्य "यद्विलिष्टम्" विश्लिष्टम् ॥ २४ ॥

त्वष्टृदेवत्या त्रिष्टुप्। इतः परं याजमानम्॥ का० (३, ८,८,-१०) पूर्णपात्र निनयति परीत्य सन्नं यजमानोऽञ्जलिना प्रतिगृह्णाति सं वर्चसेति मुखं विमृष्ट इति। समित्युपसर्गोऽगन्महीत्यनेन सम्बद्धः प्रत्येकम्। वर्चसा ब्रह्मवर्चसेन वय समगन्महि सङ्गता भवामः।

पयसा क्षीरादिरसेन समगन्महि । तनूभिरनुष्ठानक्षमैः शरीरावयवैः यद्वा तनूभिर्भार्य्यापुत्रादिभिः समगन्महि । शिवेन शान्तेन कर्मश्रद्धायुक्तेन मनसा समगन्महि । यज्ञमुपगच्छतो नरस्य वर्चसाद्युपैति तदनेन पुनराप्याययति । किञ्च सुदत्र शोभनदान त्वष्टा राया धनानि विदधातु करोतु । तन्वः शरीरस्य मदीयस्य यत् विलिष्ट विशेषण न्यूनमङ्ग तदनुमार्ष्टु । न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु । धनस्य शरीरस्य पुष्टिं करोत्वित्यर्थः । सुष्ठु ददातीति सुदत्रः । सुपूर्वाद्दातेः त्रन् । सार्वधातुभ्य इति त्रन् । बाहुलकत्वाद्भस्य ॥ २४ ॥

दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । अस्मादन्नात् । अस्यै प्रतिष्ठायै । अगन्म स्वः । संज्योतिषाभूम ॥ २५ ॥

विष्णुक्रमान् क्रमते । "दिवि विष्णुः" द्युलोके विष्णुर्यज्ञो मदीयः "व्यक्रंस्त" विक्रान्तवान । "जागतेन छन्दसा" "ततो निर्भक्तः" । ततो द्युलोकात् निर्भक्तो निर्गतभागः कृतः । "योस्मान द्वेष्टि" हिंनस्ति । "यं च वयं द्विष्मः" हिंस्मः । अनेनोत्तरावपिमन्त्रौ व्याख्यातौ । भागमवेक्षते । "अस्मादन्नात् अस्मात् यज्ञभागात् । निर्भक्त इत्यनुषङ्गः । भूमिमवेक्षते । "अस्यै प्रतिष्ठायै" । अस्या भूमेः प्रतिष्ठायाः निर्भक्त इत्यनुषङ्गः । प्राङीक्षते । "अगन्म स्वः" । अनेन कर्मणा अगन्म गताः । कम्, स्वर्गं यज्ञं सूर्यं देवान् । स्वरव्ययमनेकार्थम् । आहवनीयमीक्षते । "संज्योतिषाभूम" समित्येकीभावमाचष्टे आहव-

नीयलक्षणेन ज्योतिषा एकीभूताः ॥ २५ ॥

का० ( ३, ८, ११ ) विष्णुक्रमान् क्रमते दिवि विष्णुरिति मन्त्रमिति । विष्णुपादबुद्ध्या स्वपादस्य भूमौ प्रक्षेपा विष्णुक्रमाः।विष्णुर्यज्ञपुरुषः । जागतेन छन्दसा जगतीछन्दोरूपेण स्वकीयपादेन दिवि द्युलोके व्यक्रस्त विशेषेण क्रमेण कृतवान् । तथा सति ततो द्युलोकात् निर्भक्तो भागरहित कृत्वा निःसारितः । कः । योऽस्मान्द्वेष्टि यं च वयं द्विष्मः।योऽस्मान् दृष्ट्वा न प्रीयते यंच दृष्ट्वा वयं न प्रीयामहे स द्विविधोऽपि शत्रुर्दिवो निःसारितः । एवमुत्तरावपि विष्णुक्रममन्त्रौ व्याख्येयौ ॥ का० [ ३, ८, १३ ) अस्मादन्नादिति भागमवेक्षत इति । योऽयमभागोऽवेक्ष्यते अस्मादन्नाद्यजमानभागान्निर्भक्त इति वाक्य शेषोऽनुवर्त्तनीयः ॥ का० (३, ८, १४) अस्यै प्रतिष्ठाया इति भूमिमिति । अवेक्षत इति चतुर्षु मन्त्रविनियोगेष्वनुवर्त्तते । अस्यै अस्याः पुरतो दृश्यमानाया प्रतिष्ठाहेतोर्यज्ञियभूमेः निर्भक्त इत्यादि पूर्ववत् ॥ का० ( ३, ८, १५ ) अगन्म स्वरिति प्राचीति । पूर्वस्यां दिशि स्थितं स्वः स्वर्गं सूर्यं वा वयमगन्म प्राप्ताः । यज्ञानुष्ठानेन । का० [ ३, ८, १६ ] संज्योतिषेत्याहवनीयमिति । ज्योतिषाहवनीयलक्षणेन वयं समभूम सङ्गता अभूम ॥ २५ ॥

स्व॒य॒म्भूर॑सि॒ श्रेष्ठो॑ र॒श्मिर्व॑र्चो॒दा अ॑सि॒ वर्चो॑ मे देहि । सूर्य॑स्या॒वृत॒मन्वाव॑र्त्ते ॥ २६ ॥

सूर्यमुदीक्षते । "स्वयंभूरसि" । अकृतकस्त्वं भवसि । "श्रेष्ठः" प्रशस्ततमः "रश्मिः" । सप्त रश्मय आदित्यस्य तत्र चतसृषु दिक्षु चत्वारो रश्मयः । एकोऽधस्तादेक उपरिष्टात् । मण्डलशरीराहंमानी हिरण्यगर्भाख्यः पुरुषः सप्तमः श्रेष्ठोरस्मिरिति । तथाच श्रुतिः । "अथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोक" इति । यस्त्वं स्वयंभूरासि श्रेष्ठश्च रश्मिस्तं त्वां ब्रवीमि । "वर्चोदा आसि" । ब्रह्मवर्चसस्य स्वरसेनैव स्वभावेनैव दातासि, अतो वर्चोमे मह्यं "देहि" । आवर्तने ।

"सूर्यस्यावृतम्" । आवर्त्तनमावृत् । सूर्यस्यावर्त्तन"मनु" अहम् "आवर्त्ते" । "तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमनु आवर्त्तत" इति श्रुतिः ॥ २६ ॥

का० ( ३, ८, १७ ) स्वयम्भूरिति सूर्य्यमिति । हे सूर्य्य ! त्वं स्वयम्भूरकृतकः स्वयसिद्धोऽसि । श्रेष्ठो प्रशस्यतमो रश्मिः मण्डलशरीराभिमानी हिरण्यगर्भाख्योऽसि । सूर्य्यस्य सप्त रश्मयः सन्ति । चतुर्दिक्षु चत्वारः । एक उपर्य्येकोऽधस्तात् सप्तमो मण्डलाभिमानी हिरण्यगर्भः पुरुष स श्रेष्ठ स त्वमसि । यतस्त्वं वर्चोदा असि तेजसो दातासि अतो मे वर्चः ब्रह्मवर्चसं देहि ॥ ( ३, ८, १९ ) सूर्य्यस्येत्यावर्त्तते प्रदक्षिणामिति । आवर्त्तनमावृत् । सूर्य्यस्य सम्बन्धिनमावृतमावर्त्तनमनुगत्याहमपि आवर्त्ते प्रादक्षिण्येन वर्त्तनं करोमि ॥ २६ ॥

अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः । अस्थूरिणौ गार्हपत्यानि सन्तु शतꣳ हिमाः । सूर्यस्यावृतमन्वावर्त्ते ॥ २७ ॥

गार्हपत्यमुपतिष्ठते । "अग्ने गृहपते" हे भगवन्नग्ने गृहपते "सुगृहपतिः शोभनो गृहपतिः अहं त्वया गृहपतिना गृहाणां पालयित्रा भूयासं भवेयम् । किञ्च "सुगृहपतिस्त्वं मया अग्ने" "सहायेन गृहपतिना भूयाः" भवेः । एवमनेन प्रकारेण । "अस्थूरिणौ गार्हपत्यानि सन्तु" । अन्यतरतो युक्तं शकटं स्थूरीत्युच्यते । तत्त्वतः प्रतिपिध्यते अस्थूरीति । लुप्तोपमश्चैतत् । यथा उभयतो युक्तं शकटम्, एवं नौ आवयोः "गार्हपत्यानि" गृहपतिसंयुक्तानि कर्माणि "सन्तु" । "शतं हिमाः" शतं वर्षाणि । अथावर्त्तते । "सूर्यस्यावृतमन्वावर्त्ते" इति । व्याख्यातम् ॥ २७ ॥

का० ( ३, ८, २१ ) गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति । हे गृहपते ! अस्मदीयगृहस्य पालक ! हे अग्ने ! त्वया गृहपतिना गृहपालकेन कृत्वा त्वत्प्रसादेनेत्यर्थः । अहं सुगृहपतिः शोभनो गृहपतिः भूयासं भवेयम् । तथा हे अग्ने ! त्वमपि मया गृहपतिना मदीयसेवयेत्यर्थः । सुगृहपतिः शोभनो गृहपालको भूयाः भव । अग्ने पदस्यावृत्तिरादरार्था । यद्य यानि नौ आवयोर्गार्हपत्यानि गृहपतिभ्यां स्त्रीपुरुषाभ्यां निष्पाद्यानि कर्माणि शतं हिमा वर्षाणि शतवर्षपर्यन्तमस्थूरीव सन्तु । निरन्तरमव्याहतानि प्रवर्त्तन्ताम् । एकयानड्वा बलीवर्देयुक्त शकटं स्थूरि न स्थूरि अस्थूरि । लुप्तोपमानम् । बलीवर्दयुक्त शकटं यथा निरन्तरम् अव्यवहितं प्रसरति तथास्माकं गार्हपत्यानि सन्तु । गृहपतिना संयुक्तं ञ्य इति ञ्यप्रत्ययः ॥ का० ( ३, ८, २३ ) सूर्यस्येत्यावर्त्तते प्रदक्षिणमिति । व्याख्यातम् ॥ २७ ॥

अग्ने॑ व्रतपते व्रतम॑चारिषं तद॑शकं तन्मे॑ऽराधि । इदम॒हं य ए॒वास्मि॒ सो॑ऽस्मि ॥ २८ ॥

व्रतं विसृजते । "अग्ने व्रतपते" हे अग्ने व्रतपते "व्रत"महम् । अचारिषं" चरितवानस्मि । "तदशकं" शक्तवानस्मि । "तन्मे" मम "आराधि" राद्धं फलम् अभिसमृद्धमित्यर्थः । द्वितीयो व्रतविसर्गमन्त्रः । 'इदमहम्" हे अग्ने त्वत्साक्षिकं व्रतं गृहीत्वा इदं कर्म समाप्य य एव कर्मणः पुरा अहमस्मि मनुष्यः स एवास्मि ॥ २८ ॥

का० ( ३, ८, २९ ) व्रतं विसृजते येनोपेयादिति । व्रतग्रहणे मन्त्रद्वयमुक्तं तयोर्मध्ये येन व्रतादानं कृतं प्रथमेन द्वितीयेन वा । अत्रापि तदनुसारेण व्रतं विसृजेत् । हे अग्ने ! हे व्रतपते कर्मपालक ! व्रतमचारिषं कर्मानुष्ठितवानस्मि तदशकं शकितवान् । त्वत्प्रसादात्तत्कर्मशक्तोऽभवम् । त्वया च तन्मे मदीयं कर्म अराधि साधितम् । द्वितीयो मन्त्रः । हे अग्ने ! इदं कर्म समाप्य योऽहं कर्मणः पुरा अस्मि स एव मनुष्योऽस्मि ॥ २८ ॥

इति दर्शपूर्णमासेष्टिमन्त्राः समाप्ताः ॥

यमर्थः । यस्यामतिरात्ममयी भा ऊर्ध्वा गगने सर्वमदिद्युतत् । अमाशब्द आत्मवचनः आत्ममयी ततिर्मतिर्वा अमतिः । तन्यत इति ततिः दीप्तिः । मतिरपि प्रकाशरूपत्वाद्दीप्तिः । अमा ततिशब्दस्य वा अमतिभावः । सवितृभाविशेषणम् । आत्मप्रकाशमयी ततिर्मतिर्वा यस्य भाः अदिद्युतत् । किंनिमित्तम् । सवीमनि अनुज्ञानिमित्तं सर्वाणि कर्माण्यनुज्ञातुमित्यर्थः । षु प्रसवैश्वर्ययोः सृस्तस्तुभ्य ईमनिजिति ईमनिच् । गुणावादेशौ । सवीमा प्रसवोऽनुज्ञेत्यभिधानम् । स स्वरादित्यः । कृपा कल्पनं कृप् तया कृपा कल्पनया अमिमीत सोमामिति शेषः । एतावान् सोम इति तदीयं परिमाण निश्चितवानित्यर्थः । किम्भूतः स्वः हिरण्यपाणिः हिरण्यं पाणौ यस्य सौवर्णाभरणयुक्तहस्तः । सुक्रतुः साधुसङ्कल्पः । का० ( ७, ७, २० ) अन्तान् सङ्गृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेतीति । हे सोम । प्रजाभ्यः प्रजानामुपकाराय त्वा त्वां बध्नामीति शेषः । का० ( ७, ७, २१) अङ्गुल्या मध्ये विवृणोति प्रजाभ्यस्त्वानुप्राणन्त्वितीति । उष्णीषेण बद्धस्य सोमदेवस्य श्वासरोधो मा भूदिति विवरं कुर्य्यादिति सूत्रार्थः । हे सोम । प्रजास्त्वामनुप्राणन्तु श्वासं कुर्वन्तं त्वामनुसृत्य सर्वाः प्रजाः श्वास कुर्वन्तु जीवन्तु । तथा हे सोम । प्रजा अनुश्वासं कुर्वतीः प्रजा अनुसृत्य प्राणिहि श्वास कुरु । प्रजानां तव च कदाचित् श्वासरोधो मा भूत् परस्परमनुसृत्य जीवनं भवत्वित्याभिप्रायेण विवरकरणमित्यर्थः ॥ २५ ॥

**शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन । सग्मे ते गोः । अस्मे ते चन्द्राणि । तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम् ॥ २६ ॥**

हिरण्यमालभ्य वाचयति । "शुक्रं त्वा" । हे सोम शुक्रमक्लिष्टकर्माणं त्वां शुक्रेण हिरण्येन क्रीणामि । एवं सर्वमपि व्याख्येयम् । सोमविक्रयिणं हिरण्येनाभिकम्पयति । "सग्मेते गोः" गौरिति विपरिणामः ॥ सह गवा वर्त्तत इति सग्मो यजमानः । तव संबन्धिनी या गौः सा यजमाने वर्त्तत इति ।

सोमक्रयिणं निराशं करोति। यजमानसहितं निदधाति। "अस्मे ते"। हे सोमक्रयिन् अस्मासु तव संबन्धीनि हिरण्यानि वर्त्तन्ते। अजामालभ्य वाचयति। "तपसस्तनूरसि"। तपसः "प्रजापतेः" हे अजे "तनूः" शरीरं त्वमसि। "प्रजापते" श्च "वर्णः" रूपं त्वमसि। "सा यत्त्रिः संवत्सरस्य विजायते तेन प्रजापतेर्वर्णः"। एवमजां सोमसमक्षमभिष्टुत्य अथेदानीं सोममाह। "परमेण पशुना क्रीयसे" त्वं हे सोम। सा यत्त्रिः संवत्सरस्य विजायते तेन परमपशुः। यस्मात्त्वं परमेणोत्कृष्टेन पशुना क्रीयसे तस्मात्तव प्रसादादहम् "सहस्रपोषम्" सहस्रं प्राणिनां यत्पुष्णाति धनं तदहं पुषेयं वर्द्धयेयम्। सहस्रप्राणिपोषो मम गृहे वर्द्धमानोऽस्तु इत्यभिप्रायः॥ २६॥

का० (७, ८, १६) शुक्रं त्वेति हिरण्यमालभ्य वाचयतीति। हे सोम! शुक्र दीप्यमान त्वा त्वां शुक्रेण दीप्यमानेन हिरण्येन क्रीणामि क्रीतं करोमि। किम्भूतं त्वां चन्द्रं चदि आह्लादने फलहेतुत्वेनाह्लादकरम्। तथा अमृत स्वादुत्वेनामृतसमानम्। किम्भूतेन शुक्रेण चन्द्रेणाह्लादकरेण तथामृतेनाग्निसयोगादिनापि विनाशरहितेन॥ का० (७, ८, १७) सग्मेन इति सोमविक्रयिणं हिरण्येनाभिकम्पयतीति। यो हिरण्यमादाय सोमं किक्रीणीते तं हिरण्येनाभिकम्पयेत्। तद्धस्ते हिरण्य दत्त्वा दत्त्वा स्वीकुर्वस्त निराश कुर्य्यादिति सूत्रार्थः॥ षष्ठी प्रथमार्थे। हे सोमविक्रयिन्! गोः गौः सोममूल्यत्वेन तुभ्यं दत्ता सा त्वदीया गौः पुनः प्रत्यावृत्य सग्मे यजमाने तिष्ठतु। हिरण्यमेव तवास्तु गौर्मा भूदित्यर्थः॥ यद्वा ते गौः सग्मे वर्त्तते। गौर्ग्मा क्षमा क्ष्मामेत्युक्तेः (नि० १, १, २) ग्मा गौः तया सह वर्त्तमान सग्मस्तस्मिन् सग्मे ते गोरिति। यजमाने ते गौरिति श्रुतेः (३, ३, ३, ७) सग्मो यजमानः॥ का० (७, ८, १८)। अस्मे ते इति यजमानसहितं निदधातीति। यजमाने प्रत्यर्पितं यद्गोद्रव्यं तत्पुनर्यजमानसहितं सोमविक्रयिणः पुरतो निदध्यादिति सूत्रार्थः। हे सोमविक्रयिन्! ते चन्द्राणि तुभ्यं दत्तानि यानि हिरण्यानि वा-

न्यस्मे अस्मासु प्रत्यावृत्य तिष्ठन्तु तव गौरेव सोममूल्यमस्तु हि-रण्यानि मा भुवन्नित्यर्थः ॥ का० ( ७, ८, २० ) अजां प्रत्यङ्मुखीमालभ्य वाचयति तपसस्तनूरसीति । अर्धे अजा देवतास्य यजुषोऽर्धे सोमः । हे अजे ! त्वं तपसः पुण्यस्य तनूरसि देहोऽसि । दिवि स्थितस्य यज्ञियस्यानयनायाजां गृहीत्वा गायत्री जगामेति तित्ति-रिणा सोमाहरणोपाख्याने उक्तत्वादजायाः पुण्यशरीरत्वम् । किञ्च हे अजे ! त्वं प्रजापतेर्वर्णोऽसि वर्णो देहः । यथा प्रजापतिः सर्वदेवताप्रिय एवमजापि । तदुक्तं तित्तिरिणा । सा वा एषा सर्वदेवत्या यदजेति । एवमजामुक्त्वा सोम प्रत्याह । हे सोम ! परमेण पशुना उत्तमेनाजालक्षणेनानेन पशुना त्वं क्रीयसे । तपसस्तनूत्वादजाया उत्तमत्वम् । अतस्तव प्रसादात्सहस्रपोषं पुत्रपश्वादिसहस्राणां पोषो यथा भवति तथा पुषेयं पुष्टो भूयासम् ॥ यद्वायमर्थः । हे अजे ! त्वं प्रजापतेस्तपसस्तनूरसि प्रजापतितपोरूपासि तत उत्पन्नत्वात् । तदुक्तं श्रुत्या ( ३, ३, ३, ८ ) । तपसो ह वा एषा प्रजापतेः सम्भूता यदजेति । किञ्च प्रजापतेर्वर्णो रूपं त्वमसि । त्रिगुणत्वात् प्रजापतेस्त्रिरूपत्वम् । अजापि प्रतिसंवत्सरं त्रिवार प्रसूते तस्मात् प्रजापतेर्वर्णत्वम् । तदुक्त श्रुत्या ( ३, ३, ३, ९ ) । सा यत्त्रिः संवत्सरस्य जायते तेन प्रजापतेर्वर्ण इति । एवमजां स्तुत्वा सोममाह । परमेणोत्कृष्टेन पशुनाजया त्व क्रीयसे ततोऽह सहस्रपोपं सहस्र प्राणिनां पुष्णातीति सहस्रपोपं धन पुषेयं पुष्णीयां वर्धयेयमित्यर्थः । पुष्णातेर्व्यत्ययेन शे प्रत्यये लिङि पुषेयमिति रूपम् ॥ २६ ॥

**मित्रो न एहि सुमित्रधः । इन्द्रस्योरुमाविश द-क्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् । स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो । एते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् ॥ २७ ॥**

सोममादत्ते । मित्रो न एहि" । हे सोम मित्रस्त्वं सन्नोऽस्मा-न्येहि । मित्रशब्देनेहादित्यो गृह्यते पुंलिङ्गार्थात् । "सुमित्र-धः" । शोभनानि मित्राणि दधाति पुष्णातीति सुमित्रधः । य-

स्त्वं सुमित्रधः । यजमानस्य दक्षिण ऊरौ निदधाति "इन्द्रस्योरुम्" । स इन्द्रस्य यजमानस्य ऊरुं दक्षिण "माविश" उपविश । "एष वा अत्रेन्द्रो भवति यद्यजमान" इति श्रुतिः । "उशन्नु शन्तम्" । वश कान्तौ । कामयमानस्त्वं कामयमानमेव । यजमानस्योरुमाविश इत्यनुवर्त्तते । "स्योनः स्योनम्" । स्योनमिति सुखनाम । सुखरूपस्त्वं सुखरूपम् । यजमानस्योरुमाविश इत्यनुवर्त्तते । एवं परस्परप्रीत्या अवियुक्तौ भवेतामित्यभिप्रायः । सोमक्रयणाननुदिशति । "स्वान भ्राज" । सप्तदशानां मध्यात्सप्त तावत्सोमक्रयणाननुदिशति । हे स्वान भ्राज "अङ्घारे बम्भारे हस्त सुहस्त कृशानो" । एवं सप्तधिष्ण्यान् सम्बोध्य अथेतरानाह । "एते वः सोमक्रयणाः" । एते वः युष्माकं मध्ये तावत् सोमक्रयणाः "तान् रक्षध्वम्" तान् गोपायत । "धिष्ण्यान् मा वो दभन्" एते होतृका अपि स्वानभ्राजादयः युष्मान् मा दभ्नन् । दभ्नोतिर्हिंसाकर्मा । मा युष्मान् दभ्नुयुः ॥ २७ ॥

का० ( ७, ८, २१ ) सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोममादायेति ॥ सौम्यम् । हे सोम ! त्वं नोऽस्मान् प्रत्येहि आगच्छ । किम्भूतस्त्व मित्रः सखा प्रीतियुतः यद्वा मित्रः रविरूपः । तथा सुमित्रधः शोभनानि मित्राणि दधाति पुष्यति सुमित्रधः । क्रीत्वा वाससा बद्धस्य सोमस्य वरुणदेवताकत्वेन क्रूरत्वात्तच्छान्त्यर्थो मित्रत्वेन प्रार्थ्यते । तदाह तित्तिरिः । वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रध इत्याह शान्त्यै इति ॥ का० ( ७, ८, २३ ) दीक्षितारौ दक्षिणे प्रत्युह्य वासो निदधातीन्द्रस्योरुमितीति । वासः प्रत्युह्य वस्त्रमुपरिस्थाप्य सोमं निदध्यादित्यर्थः ॥ यजमानरूपेण परमैश्वर्येणोपेतत्वादत्रेन्द्रशब्देन यजमानः । तथा च श्रुतिः ( ३, ३, ३, १० ) । एष वा अत्रेन्द्रो भवति यद्यजमान इति । हे सोम ! त्वमिन्द्रस्य यजमानस्य दक्षिणमूरुमाविश दक्षिणे ऊरावुपविशेत्यर्थः । किम्भूतस्त्वमुशन् वश कान्तौ वष्टि उशन् शतृप्र-

स्यय: ऊरुं कामयमानः । तथा स्योनः सुखभूतः । किम्भूतमूरुमु-
शन्तं सोमं कामयमानं स्योनमुपवेशे सुखकरम् । पुरा देवाः सोमं
क्रीतमिन्द्रस्योरावुपवेशयन् तस्मादत्रेन्द्रशब्देन यजमानः । तदाह
तित्तिरिः देवा वै सोममक्रीणंस्तमिन्द्रस्योरौ दक्षिण आसादयन्
स खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाहेति । का० ( ७, ८,
२४ ) स्वान भ्राजेति जपति सोमविक्रयिणमीक्षमाण इति । स्व-
नति स्वानः । भ्राजते शोभतेऽसौ भ्राजः । अङ्घस्य पापस्यारिरङ्घा-
रिः । बिभर्त्ति पुष्णाति विश्वमिति बम्भारिः । हसति हस्तः सर्व-
दा हृष्टरूपः । शोभनौ हस्तौ यस्य सुहस्तः । कृशं दुर्बलमनिति
जीवयतीति कृशानुः । स्वानादयः सप्त सोमरक्षका देवविशेषाः ।
हे स्वानादयः सप्त देवाः ! वो युष्माकमेते सोमक्रयणाः सोमः क्री-
यते यैस्ते सोमं क्रेतुमानीता हिरण्यादिपदार्थाः पुरतः स्थापिताः ।
तान् पदार्थान् यूयं रक्षध्वमवत । वो युष्मान्मा दभन् वैरिणो मा
हिंसिषत । स्वानादयो धिष्ण्याधिष्ठातारः । सोमरक्षकाः । तदाह
तित्तिरिः । स्वान भ्राजेत्याह ते त्वामुष्मिँल्लोके सोममरक्षन्निति ॥२७॥

परि॑ माग्ने दु॒श्च॑रिताद्बा॑धस्वा॒ मा सु॒च॑रिते भज ।
उदा॒यु॑षा स्वा॒युषोद॑स्थाम॒मृता॑२॥ऽअनु॑ ॥ २८ ॥

गृहीतसोमं वाचयति । "परि माग्ने" । आग्नेयी पुरस्ता-
द्बृहती । हे भगवन्नग्ने "परिबाधस्व" परित्रायस्व मां "दुश्च-
रितात्पापाचरणात् । "आभज माम्" आसेवस्व माम् "सुच-
रिते" वर्त्तमानम् । उत्तिष्ठति । "उदस्थाम्" उत्तिष्ठामि आयु-
षा निमित्तभूतेन चिरं जीवनाय स्वायुषा निमित्तभूतेन शोभनेन
प्रकारेण दानहोमयागादिभिः । येनास्मदीयमायुर्योत्स्यनेन च
हेतुना उदस्थाम् । उत्तिष्ठामि च । "अमृतान्" देवान् "अनु"
अतः । परि माग्ने दुश्चरिताद्बाधस्वेति सम्बन्धः । अमृतशब्देनात्र
बहुवचनान्तेन सोमोऽभिधीयते । आगते सोमे दीक्षित उत्तिष्ठति ।
तस्यैषा प्रायश्चित्तिः ॥ २८ ॥

का० ( ७, ९, १ ) गृहीतसोमं परि माग्न इति वाचयतीति ।

अग्निदेवत्या पुरस्ताद् बृहती । यस्या आद्यो द्वादशाक्षरस्त्रयोऽष्टाक्षराः पादाः सा पुरस्ताद्बृहती । आद्यश्चेत् पुरस्ताद्बृहतीत्युक्तेः । हे अग्ने ! दुश्चरितात्पापान्मा मां परिबाधस्व परितो निवारय । मे पापे प्रवृत्तिर्मा भूदित्यर्थः । सुचरिते शोभने चरित्रे सदाचाररूपे पुण्ये मा मां यजमानमाभज सर्वतो भज स्थापयेत्यर्थः ॥ का० ( ७, ९, ३ ] उदायुषेत्युत्थानमिति । उदायुषा उत्कृष्टेन चिरजीवनलक्षणेनायुषा निमित्तेन तथा स्वायुषा यागदानादिना शोभनेनायुषा निमित्तभूतेन अमृताननु सोमादिदेवाननुसृत्य उदस्थामहमुत्थितवानस्मि । तिष्ठतेर्लुङि रूपम् ॥ २८ ॥

**प्रति पन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ २९ ॥**

अनोऽभ्येति । "प्रति पन्थाम्" अनुष्टुप् ।पन्थानं स्तौति । "प्रत्यपद्महि" प्रतिपद्येमहि पन्थानम् । "स्वस्तिगाम्" । अविनाशेन यत्र गम्यते तं स्वतिगाम् । "अनेहसम्" । एह इत्यपराधनाम । न विद्यते यत्र गतानामपराधः स तथोक्तः । किंच । "येन" पथा गच्छन् "विश्वाः" सर्वाः "परि वृणक्ति" । परिवर्जयति । वृजी वर्जने । "द्विषः" दुष्टान । किञ्च "विन्दते वसु" । लभते धनम् ॥ २९ ॥

का० ( ७, ९, ४ ) शीर्ष्णि सोमं कृत्वा पाणिमन्तर्धाय प्रति पन्थामित्यनोऽभ्येतीति । शकटमभिलक्ष्य गच्छेदित्यर्थः । अनुष्टुप् पथिदेवत्या । पन्थानं स्तौति । पन्थां पन्थान मार्गं प्रत्यपद्महि वयं प्रत्यपद्यामहि प्रतिपन्नाः प्राप्ता अभूमेत्यर्थः । पद गतावित्यस्य व्यत्ययेन शपि लुप्ते लङि रूपम् । विभक्तेः पूर्वसवर्णे पन्थामिति रूपम् । किम्भूतं पन्थानं स्वस्तिगां स्वस्ति क्षेमेण गम्यते यत्र स स्वस्तिगास्तं क्षेमेण गन्तुं योग्यम् । गमेर्विटि प्रत्यये विड्वनोरनुनासिकस्यादिति मकारस्याकारे रूपम । तथा अनेहसम् । एहः पापरूपश्चोरादिबाधस्तद्रहितम् । यद्वा एह इत्यपराधनाम । यत्र गतानामपराधो नास्ति । येन पथा ग-

च्छन् पुरुषो विश्वाः विद्वान् सर्वान् द्विषो द्वेषिणश्चोरादीन् परिवृणक्ति परितो वर्जयति वृजी वर्जने रुधादिः । वसु विन्दते धनश्च लभते तं पन्थानमिति पूर्वत्रान्वयः । विदॢ लाभे ॥ २९ ॥

अदि॑त्यास्त्वगसि । अदि॑त्यै सद॒ आसी॑द । अस्त॑भ्नाद् द्यां वृ॑षभो अ॒न्तरि॑क्षममि॑मीत वरि॒माणं॑ पृथि॒व्याः । आसी॑द॒द्विश्वा॒ भुव॑नानि स॒म्राड्विश्वेत्तानि॒ वरु॑णस्य व्र॒तानि॑ ॥ ३० ॥

कृष्णाजिनमास्तृणाति । "अदित्यास्त्वगसि" । व्याख्यातः शेषः । सोमं निदधाति । "अदित्यै सदः" स्थान'मासीद" । सोममालभ्य वाचयति । "अस्तभ्नाद् द्याम्" त्रिष्टुभौ वारुण्यौ । योऽयं "वृषभः" वर्षिता "अस्तभ्नाद् द्याम्" । स्तम्भितवान् द्युलोकम् । यश्चा"न्तरिक्ष" मस्तभ्नात् । यश्च"मिमीत वरिमाणं पृथिव्याः" । मिमीते वरिमाणं गुरुत्वं पृथिव्याः । यश्च "सम्राट् देवताविशेषः । "आसीदद्विश्वा भुवनानि" । आसीदति हि सर्वाणि भूतजातानि आत्मत्त्वेनाधिपत्येन च । "विश्वेत्तानि" । इच्छब्द एवार्थे । सर्वाण्येवैतानि "वरुणस्य व्रतानि" कर्माणि । ये इमान् लोकान् स्तभ्नुवन्ति ये च सर्वजनानाविशन्ति तेऽपि च वरुणाज्ञां कुर्वन्तीति परब्रह्मरूपेण वरुणस्य स्तुतिः ॥ ३० ॥

का० ( ७, ९, १ ) कृष्णाजिनमस्मिन्नास्तृणात्यदित्यास्त्वगसीति । अस्मिन् शकटे इत्यर्थः । हे कृष्णाजिन ! त्वमदित्यास्त्वगसि अखण्डितायाः पृथिव्याः त्वग्रूपं भवसि । का० ( ७, ९, १ ) तस्मिन् सोम निदधात्यदित्यै सद इतीति । हे सोम ! त्वमदित्यै सदः अदितेर्भूमेः सम्बन्धि स्थानमासीद सर्वतः प्राप्नुहि तत्रोपविशेत्यर्थः ॥ का० ( ७, ९, ८ ) अस्तभ्नाद् द्यामिति सोममालभ्य वाचयतीति । द्वे वरुणदेवते त्रिष्टुभौ । क्रीतसोमस्य वरुणदेवतत्वाद्वरुणो ब्रह्मरूपेण स्तूयते । वृषभः श्रेष्ठो वरुणो द्या-

मस्तम्भनात् द्युलोको यथा न पतति तथा स्वकीययाज्ञया स्तम्भितवान् । तथान्तरिक्षमप्यस्तम्भनात् । तथा पृथिव्या वरिमाणं भूमेरुरुत्वममिमीते मिमीते । उरोर्भावो वरिमा तम् । एतावती भूरिति परिमाणं जानातीत्यर्थः । तथा सम्राट् सम्यग्राजमानो वरुणो विश्वानि सर्वाणि भुवनानि आसीदत् लोकान् व्याप्नोति । विश्वा विश्वानि सर्वाणि इत् एवार्थे सर्वाण्येव वरुणस्य व्रतानि कर्माणि । यद्वा इदित्यव्ययमित्थमर्थे । इदित्थं तानि द्युलोकस्तम्भनादीनि वरुणस्य व्रतानि व्रतवन्नियतानि । सर्वदा तानि करोतीत्यर्थः ॥ ३० ॥

**वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु । हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ ३१ ॥**

"वनेषु वि" । वीत्ययमुपसर्गस्ततानेत्यनेन संबध्यते । यो वरुणः "वनेषु" वृक्षाग्रेषु "विततान" वितनो"त्यन्तरिक्षमा" काशम् । यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादुपलभ्यत एव । "वाजमर्वत्सु" । वीर्यं वै वाजः पुमांसोऽर्वन्तः" इति श्रुतिः । वाजं वीर्यम् । अर्वत्सु पुरुषेषु । ततानेत्यनुवर्त्तते । "पय उस्रियासु" । उस्रियासु गोषु पयो विततान । "हृत्सु क्रतुम्" । क्रतुः संकल्पः हृदयेषु संकल्पं विततान । "विक्ष्वग्निम्" । प्रजास्वग्निं विततान । "दिवि" द्युलोके "सूर्यमदधात्" स्थापितवान । "सोममद्रौ" अद्रिषु सोमं स्थापितवान् । य एवं परब्रह्मलक्षणो" वरुणस्तं वयं स्तुम इतिशेषः ॥ ३१ ॥

का० ( ७, ९, ९ ) वनेषु व्यन्तरिक्षमिति सोमपर्य्याणहनेन परितस्येति बन्धनहेतुना वस्त्रेण परितो वेष्टयित्वेत्यर्थः । वि उपसर्गस्ततानेत्यनेन सम्बध्यते वरुणो वनेषु वनगतवृक्षाग्रेषु अन्तरिक्षाग्रेषु अन्तरिक्षमाकाशं विततान । यद्यपि सर्वगतमन्तरिक्षं त-

थापि तत्र मूर्त्तद्रव्याभावादत्यन्तं विस्तारितवान् । तथार्वत्सु अश्वेषु वाजं बल विततानेत्यनुवर्त्तते । यद्वार्वत्सु पुरुषेषु वाजं वीर्यं वितताना । वीर्यं वै वाजः पुमाꣳसो ऽर्वन्त इति श्रुतेः ( ३, ३, ४, ७ ) । तथा उस्रियासु पयः क्षीरं विततान उस्रियाशब्दो गोनामसु पठितः ( निघं० २, ११, ३, । हृत्सु हृदयेषु क्रतुं सङ्कल्पंतच्छक्तियुत मनो विततान । विक्षु प्रजासु अग्नि जठराग्निम् । दिवि द्युलोके सूर्यं विततान । अद्रौ पर्वते सोमं वल्लीरूपमदधात् स्थापितवान् । पर्वतपाषाणसन्धिषु सोमवल्ल्या उत्पद्यमानत्वाददौ सोमस्थापनमुक्तम् । तदाह तित्तिरिः । सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोम निदधातीति । य एवं मन्त्रद्वयोक्तद्युलोकस्तम्भनादिसामर्थ्यवान् परब्रह्मलक्षणो वरुणस्त वय स्तुम इति शेषः ॥ ३१ ॥

सूर्य्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥ ३२ ॥

कृष्णाजिनं सोमस्य चिह्नं करोति । "सूर्यस्य चक्षुः" । अनुष्टुप् । कृष्णाजिनमुच्यते । सूर्यस्य संबन्धि चक्षुः "आरोह" । तथाभ्युच्छ्रितं भव यथा सूर्यश्चक्षुषा पश्यतीत्यभिप्रायः । "अग्ने" श्चक्षुः "कनीनक"मारोह । "यत्र"ताभ्यां दृष्टो लक्षितः । "एतशेभिः" । एतश इति अश्वनामसु पठितम् । एतशैरश्वैः "ईयसे" नीयसे । "भ्राजमानः" देदीप्यमानः । "विपश्चिता" सूर्येण सहितः । अग्निना वा विपश्चिता सहितः ॥ ३२ ॥

का० ( ७, ९, ९, ) कृष्णाजिनं पुरस्तादासजति सूर्य्यस्य चक्षुरितीति । कृष्णाजिनदेवत्यानुष्टुप् । हे कृष्णाजिन ! त्वं सूर्य्यस्य चक्षुर्नेत्रं त्वमारोह । तथा अग्नेर्वह्नेरक्ष्णो नेत्रस्य कनीनकं तारकां चारोह तथोच्चैस्तराम्भव यथैताभ्यां दृश्यसे इत्यर्थः । यत्र यस्मिन्नेतयोर्दर्शने विपश्चिता विदुषा सर्वज्ञेन सूर्य्येणाग्निना च भ्राजमानः दीप्यमानः सन्नेतशेभिरेतशैरश्वैस्त्वमीयसे गच्छसि । एतश

इत्यश्वनामसु ( निघ० १ १४, १० ) पठितम् । यत्र त्वमश्वैर्गच्छसि । ई गतौ दिवादिरात्मनेपदी । एतशैरिति करणे तृतीया । यद्वा कर्मणि रूपमेतशैरिति कर्त्तरि तृतीया । यत्राश्वैस्त्वं नीयसे इत्यर्थः । कृष्णाजिनस्य पुंस्त्वमार्षम् । सूर्य्याग्निदृष्टिविषयत्वे सति मार्गो रक्षोबाधरहितो भवति । तदुक्तं तित्तिरिणा । एष वास्य खलु रक्षोहणः पन्था योऽग्नेश्च सूर्य्यस्य चेति ॥ ३२ ॥

उस्रा वेतं धूर्षाहौ युज्येथामनश्रू अवीरहणौ ब्रह्मचोदनौ । स्वस्ति यजमानस्य गृहान् गच्छतम् ॥ ३३ ॥

अनड्वाहौ युनक्ति "उस्रा वेतम्" । ऊर्ध्वबृहती । हे उस्रौ अनड्वाहौ आ इतम् आगच्छतम् । एत्य च स्वयमेव "युज्येथाम्" योगं कुरुतम् हे "धूर्षाहौ" । षह मर्षणे । धुरं सोढुं यौ शक्नुतस्तौ तथोक्तौ । "अनश्रू" । अश्रुरहितौ हृष्टावित्यर्थः । "अवीरहणौ" । वीराणां यौ युवां वधं न कुरुतं ताववीरहणौ । प्रशस्तावित्यर्थः । "ब्रह्मचोदनौ" । ब्राह्मणानां यज्ञं प्रति प्रेरयितारौ । एवमनड्वाहौ सम्बोध्य अथेदानीं प्रयोजनमाह । "स्वस्ति" अविनाशेन "यजमानस्य गृहान् गच्छतम्" ॥ ३३ ॥

का० ( ७, ९, ११ ) अनड्वाहौ युनक्त्युस्रावेतमितीति । आनडुही । ऊर्ध्वं बृहती । यस्यास्त्रयः पादा द्वादशाक्षराः सोर्ध्वबृहती । त्रिजागतोर्ध्वबृहतीत्युक्तेः । अत्राद्यो दशार्णः द्वितीयस्त्रयोदशार्णस्ते- नैकोना । हे उस्रौ ! अनड्वाहौ । युवामेतमागच्छतमेत्य च स्वयमेव युज्येथां रथे युक्तौ भवतम् । किम्भूतौ युवाम् धूर्षाहौ धुरं सहेते धूर्षाहौ शकटधुरं वोढुं समर्थौ । तथा अनश्रू नेत्रयोरश्रुरहितौ सोत्साहावित्यर्थः । अवीरहणौ न वीरान् हतस्तौ । शृङ्गादिभिर्वीराणां शिशूनां हननमकुर्वाणौ । ब्रह्मचोदनौ ब्रह्मणो विप्रान् चोदयतस्तौ ब्राह्मणानां यज्ञं प्रति प्रेरकौ । एवं सम्बोध्य प्रयोजनमाह । तथाविधौ युवां स्वस्ति क्षेमेण यजमानस्य गृहान् प्रति गच्छतम् ॥ ३३ ॥

भुद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि । मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन् ॥ श्येनो भूत्वा परापत यजमानस्य गृहान् गच्छ तन्नौ सꣳस्कृतम् ॥ ३४ ॥

वाचयति । "भद्रो मेऽसि" । भदि कल्याणे सौख्ये च । सोम उच्यते । भन्दनीयः स्तुत्यः यतस्त्वं मे मम भवसि अतो ब्रवीमि । "प्रच्यवस्व" । च्युङ् छुङ् जिङ् किङ् प्रुङ् कुङ् सेङ् गाङ् गतौ । गच्छ । "भुवस्पते" भूतजातस्य पते । "विश्वान्यभिधामानि" । सर्वाणि स्थानानि पत्नीशालाहविर्द्धानप्रभृतीनि । किञ्च त्वा प्रच्यवमानं"मा विदन्" मा जानन्तु । "परिपरिणः" । परिणेतारो दुर्जनाः । मा च त्वां "परिपन्थिनः" । सर्वतः पन्थानं ये तिष्ठन्ति ते मा विदन् । "मा" च त्वां "वृका-अघायवो विदन्" वृका विकर्त्तनशीलाः अघायवः अघं पापं ये परस्य कर्तुमिच्छन्ति ते अघायवः । एते च त्वां गच्छन्तं मा जानन्तु । किञ्च त्वमपि "श्येनो भूत्वा परापत" । श्येनरूपमवस्थायोत्पत । ततो "यजमानस्य गृहान् गच्छ । तत् नौ" आवयोः तव च मम च "संस्कृतं" सर्वोपकरणयुक्तं स्थानं विद्यते ॥ ३४ ॥

का० ( ७, ९, १९ ) भद्रो म इति वाचयतीति । सौम्यं यजुः । हे सोम ! मे मह्यं यजमानाय मदुपकारार्थं त्वं भद्रोऽसि कल्याणरूपोऽसि । भदि कल्याणे । हे भुवः पते ! भूशब्देन भूमौ स्थितानि यजमानाध्वर्युप्रभृतीन्युच्यन्ते । तेषां भूतानां पालकत्वात् पतिः सोमः । तदाह तित्तिरिः । प्रच्यवस्व भुवस्पत इत्याह भूतानाꣳ ह्येष पतिरिति । तथाविध हे सोम ! विश्वानि सर्वाणि धामान्यभि स्थानानि पत्नीशालाहविर्धानप्रभृतीनि अभिलक्ष्य प्रच्य-

धस्व । प्रकर्षेण गच्छ । च्युङ् गतौ । प्रच्यवमानं त्वा त्वां परिपरिणो मा विदन् मा जानन्तु । सर्वतः सञ्चरन्तस्तस्करविशेषाः परिपरिण उच्यन्ते । तथा परिपन्थिना यागस्य प्रतिषेधकाः शत्रवस्त्वां मा विदन् । छन्दसि परिपन्थिपरिणौ पर्य्यवस्थातरीति निपातावेतौ । तथा वृका विकर्त्तनशीला आरण्यश्वानो दुर्जना वा त्वां मा विदन् । किम्भूता वृकाः । अघायवः परस्याघं कर्त्तुमिच्छन्ति ते अघायवः । सुप आत्मनः क्यजिति क्यचि अश्वाघस्यादित्याकारः क्याच्छन्दसीति क्यजन्तादुप्रत्ययः । किञ्च श्येनो भूत्वा श्येनरूपमास्थाय श्येनाख्यपक्षिवच्छीघ्रगामी वा भूत्वा परापत उत्पत यजमानस्य गृहान् गच्छ । तत् तत्र यजमानगृहेषु नौ आवयोः तव मम च संस्कृतं सर्वोपकरणसंयुक्तं स्थानमस्तीति शेषः ॥ ३४ ॥

**नमो॑ मि॒त्रस्य॒ वरु॑णस्य॒ चक्ष॑से म॒हो दे॒वाय॒ तदृ॒तꣳ स॑पर्यत । दू॒रे॒दृशे॑ दे॒वजा॑ताय के॒तवे॑ दि॒वस्पु॒त्राय॒ सूर्या॑य शꣳसत ॥ ३५ ॥**

वाचयति । "नमो मित्रस्य" । सौरी जगती । ऋषिर्दृष्टार्थः । परब्रह्मरूपेणादित्यमवगम्य सूर्यनमस्कारं कृत्वाऽन्येषां कथयति । "नमः सूर्याय" । कथं भूताय "मित्रस्य वरुणस्य चक्षसे" । मित्र आदित्यो वरुणश्च । उपलक्षणार्थं चैतत् । सर्वद्यावापृथिवीनिवासिलोकग्रहणार्थं वा । तथैव श्रुतिः "अयं वै लोको मित्रोऽसौ वरुण इति" । चक्षसे द्रष्ट्रे ईश्वररूपेणाध्यक्षाय । "महो देवाय तदृतꣳसपर्यत" । महते देवाय तत्सत्यं पूजयत हे ब्राह्मणाः । सपर्यतीत्यर्चाकर्मसु पठितम् । किञ्च "दूरेदृशे" दूरे स्थितो दृश्यते इति दूरेदृक् । यद्वा अतीतानागतवर्त्तमानकालसम्बन्धान् प्राणिनो दूरेऽवस्थितान् पश्यतीति दूरेदृक् । "देवजाताय" देवानुग्रहार्थं जातो देवजातः । यद्वा जाता देवा अस्मादिति देवजातः । 'निष्ठा वाहिताग्न्यादिष्वि'ति बहुव्रीहौ परनिपातः । "केतवे" । केतुरिति प्रज्ञानामसु पठितम् । प्रज्ञा-

नमस्त्राय । विज्ञानघनानन्दस्वभावायेत्यर्थः । "दिवस्पुत्राय" द्युलोकाद्धि सूर्यो विजायते । द्युलोकं वा बहुधा त्रायत इति दिवस्पुत्रः सूर्यः । "सूर्याय शंसत" । शंसु स्तुतौ । इत्थं स्वरूपाय सूर्याय स्तुतीरुच्चारयत । किमन्यैर्देवताविशेषैः ॥ ३५॥

का० [ ७, ९, २१ २२ ] शालां पूर्वेण प्रतिप्रस्थाताग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्ग मेध्यमभावे लोहितसारङ्गं नमो मित्रस्येत्येनमालभ्य वाचयतीति । सौरी जगती सूर्यदृष्टा द्वादशाक्षरचतुष्पादा जगती । अत्र मन्त्रे सूर्य्यरूपेण सोमः स्तूयते । एवं विधाय सूर्य्याय नम. । किम्भूताय मित्रस्य । चतुर्थ्यर्थे षष्ठ्यौ । मित्राय वरुणाय मित्रवरुणदेवतारूपेण वर्त्तमानाय । जगतां हितकारिणे । वृणोति वरुणः । स्वरश्मिभिर्जगदावृणवते । चक्षसे । चष्टे इति चक्षास्तस्मै । चक्षुष्मते द्रष्ट्रे इत्यर्थः ॥ यद्वायमर्थः । मित्रस्य वरुणस्य चक्षसे सर्वजगतो द्रष्ट्रे मित्रावरुणशब्देन सर्वं जगल्लक्ष्यते । तथा महो महसे तेजोरूपाय सुपां सुलुगिति विभक्तिलोपः । देवाय द्योतमानाय । तथा दूरदृशे दूरे वर्त्तमानैः प्राणिभिर्दृश्यत इति दूरेदृक् तस्मै । यद्वा दूरे पश्यतीति दूरेदृक् । देवजाताय देवाद् द्योतमानात् परमात्मनो जायतेऽसौ देवजातस्तस्मै । देवानुग्रहाय जातो देवजात इति वा । जाता देवा यस्मात्स देवजात इति वा । वाहिताग्न्यादिष्विति जातशब्दस्य परनिपात । केतवे प्रज्ञारूपाय विज्ञानघनाय । केतुरिति प्रज्ञानाम ( निघ० ३, ९, १ ) । दिवः पुत्राय द्युलोकस्य पुत्रवत् प्रियाय । द्युलोकाद्धि सूर्य्यो जायते । दिवः पुरु त्रायते स इति दिवस्पुत्रः । दिवः पालकायेति वा । एवं विधाय सूर्य्याय तदृतं सत्यमवश्यफलप्रदज्योतिष्टोमरूपं कर्म । हे ऋत्विजः ! यूयं सपर्यतानुष्ठानेन सपर्य्यां कुरुत । सपर्यतिः परिचरणकर्मा ( निघ० ३, ५, ३ ) । सूर्य्यार्थे यज्ञं कुरुतेत्यर्थः । यद्वा तदृतं सूर्य्यरूपं सत्यं ब्रह्म सपर्यत परिचरत । किञ्च शंसत शंस स्तुतौ सूर्य्यप्रीत्यर्थः स्तुतिं कुरुत । शास्त्राणि पठतेत्यर्थः । यागानुष्ठाने तस्यावश्यकत्वादित्यर्थः ॥ ३५ ॥

वरुणस्योत्तम्भनमसि । वरुणस्य स्कम्भसर्जनी

**स्थः । वरु॑णस्य ऋ॒त॒सद॑न्यसि॒ । वरु॑णस्य ऋ॒त॒सद॑नमसि । वरु॑णस्य ऋ॒त॒सद॑न॒मासी॑द ॥ ३६ ॥**

उत्तम्भनेनोपस्कभ्नाति । "वरुणस्योत्तम्भनमसि" । वरुणस्य त्वमुत्तम्भनं भवसि न तु शकटस्य । 'उदस्थास्तम्भोः पूर्वस्ये'ति स्तम्भनसकारस्य तकारः । शम्ये उद्वृहति । "वरुणस्य स्कभम्सर्जनीस्थः" । स्कभ्नोतिः समानार्थः । अर्ज सर्ज अर्जने । स्कम्भशब्देनात्र युगमुच्यते । तस्य सर्जनी वशीकरण्यौ "स्कम्भसर्जनी" वरुणस्य युवां स्कम्भसर्जनी शम्ये "स्थः" भवथः । आसन्दीमभिमृशति । "वरुणस्य ऋतसदनी" सत्यसदनी त्वं भवसि । कृष्णाजिनमस्यामास्तृणाति । "वरुणस्य ऋतसदनमसि" । वरुणस्य सत्यसदनं त्वं भवसि । सीदन्त्यस्मिन्निति सदनम् । तस्मिन् सोमं निदधाति । "वरुणस्य ऋतसदनमासीद" । सत्यसदनम् । आसीद उपविश ॥ ३६ ॥

का० [ ७, ९, २५ ] समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमितीति । पञ्च यजूंषि वारुणानि । हे काष्ठ ! त्वं वरुणस्योत्तम्भनमसि वस्त्रबद्धस्य सोमस्योन्नमन भवसि न तु शाकटस्येत्यर्थः । उत्तभ्यते शाकटमुखाग्रमुन्नतत्वेन स्थाप्यते यस्मिन् काष्ठे तत्काष्ठमुत्तम्भनम् । का० ( ७, ९, २६ ) शम्ये चोद्वृहति वरुणस्य स्कम्भसर्जनी स्थ इतीति । शकटयुगे बद्धयोर्बलीवर्दयोर्गलबहिर्भागे काष्ठनिर्मिते शम्ये स्थाप्येते । ताभ्यां वृषयोरितस्ततो गमनं निवार्यते ततस्ते स्कम्भसर्जनीशब्देनोच्येते । हे शम्ये ! युवां वरुणस्य स्कम्भसर्जनी स्थः । स्कम्भ रोधने । सर्ज अर्जने स्कम्भनं स्कम्भो रोधः स सर्ज्यते क्रियते याभ्यां ते स्कम्भसर्जन्यौ । विभक्तेः पूर्वसवर्णः । व्रियते वेष्ट्यते वस्त्रादिनेति वरुणशब्देनात्र वस्त्रबद्ध सोम उच्यते । वरुणदैवतत्वाच्च पञ्चस्वपि मन्त्रेषु ॥ का० ( ७, ९, २७–२८ ) । औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमुतामाहरन्ति चत्वारोऽभिमृश-

स्येनां वरुणस्य ऋतसदन्यसीतीति । हे आसन्दि ! त्वं वरुणस्य सोमस्य सम्बन्धिनी ऋतसदन्यसि । ऋताय यज्ञाय सद्यते उपविश्यते यस्यां सा ऋतसदनी । करणाधिकरणयोरिति ल्युप्रत्ययः । ऋतं यज्ञस्तन्निष्पत्त्यर्थमुपवेशनस्थानभूतासीत्यर्थः ॥ का० ( ७, ९, २९. ) कृष्णाजिनमस्यामास्तृणाति वरुणस्य ऋतसदनमसीतीति । हे कृष्णाजिन ! वरुणस्य बद्धस्य सोमस्य ऋतसदनं यज्ञार्थमुपवेशनस्थानमसि ॥ का० ( ७, ९, ३० ) । तस्मिन् सोमं निदधाति वरुणस्य ऋतसदनमासीदेतीति । हे सोम ! त्वं वरुणस्य बद्धबद्धस्य तव ऋतसदनं यज्ञार्थमुपवेशनस्थानभूतमासन्दीसंस्थितं कृष्णाजिनमासीद सुखेनोपविश ॥ ३६ ॥

**या ते धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒ विश्वा॑ परि॒भूर॑स्तु य॒ज्ञम् ॥ ग॒य॒स्फान॑: प्र॒तर॑णः सु॒वीरोऽवीर॑हा॒ प्रच॑रा सोम॒ दुर्या॑न् ॥ ३७ ॥**

## इति माध्यन्दिनीयायां वाजसनेयिसंहितायां चतुर्थोऽध्यायः ॥ ४ ॥

---

सोमं प्रवेशयन्वाचयति । "या ते धामानि" । सौमी त्रिष्टुप् । हे सोम "या ते धामानि" । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति । यानि तव सबन्धीनि धामानि नामानि "हविषा यजन्ति" यष्टारः । ता ते विश्वाः" तानि ते सर्वाणि । "परिभूः" । नपुंसकबहुवचनस्थाने पुंलिङ्गैकवचनम् । परिभूणि सर्वतो भवितॄणि । अस्तु" एतदपि बहुवचनं वाच्यसंयोगात् । सन्तु । "यज्ञं" यज्ञं सर्वतो गृह्णे भवन्त्वित्यर्थः । यद्वा यज्ञशब्देन प्रथमान्तानि च धामानि तव विश्वानि नामानि यज्ञः परिभूः भवतु यज्ञः परिगृह्य वर्ततामित्यर्थः । त्वं च । "गयस्फानः" गृहस्य पुत्रपशुभूहिरण्यादि-

भिर्वर्द्धयिता । "प्रतरणः" प्रतरन्ति येनापदः स प्रतरणः । "सुवीरः" शोभनवीरः । "अवीरहा" । अहन्ता वीराणाम् । "प्रचर" इत्थम्भूतस्त्वं परिभ्रम । "सोमदुर्यान्" गृहानस्मदीयान् ॥ ३७ ॥

इति उव्वटकृतौ मन्त्रभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

---

का० [ ७, ९, ३२ ] या त इति वाचयतीति । सोमदेवत्या त्रिष्टुप् गोतमदृष्टा । हे सोम ! ते तव या यानि धामानि प्रातःसवनादीनि स्थानानि प्राप्येति शेषः । हविषा त्वदीयरसरूपेण यजन्ति ऋत्विजो याग कुर्वन्ति । यज्ञमभिलक्ष्येति शेषः । ते तव ता तानि विश्वा विश्वानि सर्वाणि स्थानानि परिभूरस्तु । परितो भवति प्राप्नोति परिभूः । भू प्राप्तौ । भवान् परित. प्राप्तवान् भवतु । ऋत्विजो येषु स्थानेषु यजन्ति तानि त्व प्राप्नुहीत्यर्थः । यद्वा ऋत्विजो यानि धामानि प्राप्य यजन्ति तानि सर्वाणि ते तव यज्ञं परिभूरस्तु यज्ञं परितो भवितॄणि यज्ञव्यापकानि सन्तु । नपुंसकबहुवचनस्थाने पुंलिङ्गैकवचनमार्षम् । किञ्च हे सोम । त्व दुर्यान् गृहान् प्रचर प्र प्नुहि । दुर्या इति गृहनाम ( निघ० ३, ४, ९, ) द्व्यचोऽतस्तिङ इति ( पा० ६, ३, १३५ ) संहितायां प्रचरेति दीर्घः । किम्भूतस्त्वम् । गयस्फान गय इति गृहनाम ( निघ० ३, ४, १ ) । स्फायी वृद्धौ । गयान् स्फाययति गयस्फानः गृहाभिवर्धकः । प्रतरणः प्रकर्षेण तरन्त्यापदो येन स प्रतरणः । यद्वा प्रतारयति यज्ञपारं प्रापयतीति प्रतरणः । सुवीरः शोभनास्त्वत्प्रसादलब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्व सुवीरः । अवीरहा न वीरान् हन्तीति वीराणां परिपालक इत्यर्थः ॥ ३७ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।

शालागमाद्वाचनान्तश्चतुर्थोऽध्यायः ईरित. ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अ॒ग्नेस्त॒नूर॑सि॒ विष्ण॑वे त्वा॒ सोम॑स्य त॒नूर॑सि॒ वि॒ष्ण॑वे॒ त्वाति॑थेराति॒थ्यम॑सि॒ विष्ण॑वे त्वा॒ श्ये॒नाय॑ त्वा सोम॒भृते॒ विष्ण॑वे त्वा॒ग्नये॑ त्वा रायस्पोष॒दे विष्ण॑वे त्वा ॥ १ ॥

आतिथ्ये हविर्गृह्णाति पञ्चभिर्वैष्णवैर्यजुभिः । "अग्नेस्तनूरसि" । "अग्निशब्देन परोक्षं गायत्र्युच्यत" इति श्रुतिः । अग्नेस्तनूः शरीरं भवसि । हुतं हविरग्नेः शरीरं भवत्येव । "विष्णवे त्वा" जुष्टं गृह्णामि । सोमस्य शरीरमसि विष्णवे त्वां जुष्टं गृह्णामि । "सोमः परोक्षेण त्रिष्टुबुच्यत" इति श्रुतिः । "अतिथेरातिथ्यमसि" । अतिथेः सोमस्य आतिथ्यं भोजनमसि । "विष्णवे" त्वां जुष्टं गृह्णामि । "श्येनाय त्वा सोमभृते" । गायत्र्यै त्वां सोमहारिण्यै विष्णवे त्वामिति सम्बन्धः । "सा यद्गायत्री श्येनो भूत्वा दिवः सोममहरदिति" श्रुतिः । "अग्नये त्वा रायस्पोषदे" । धनपोषस्य दात्रे विष्णवे त्वेति सम्बन्धः । "पशवो वै रायस्पोषः पशवो जगतीति" श्रुतिः ॥ १ ॥

चतुर्थेऽध्याये सर्त्विग्यजमानस्य शालाप्रवेशमारभ्य क्रीतसोमस्य शालाप्रवेशपर्यन्ता मन्त्रा उक्ताः ॥ अथ पञ्चमोऽध्यायस्तत्रादौ आतिथ्येष्टौ हविर्ग्रहणादिमन्त्रा उच्यन्ते ॥ का० ( ८, १, ४ ) निर्वपेदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रमिति ॥ पञ्च यजूंषि वैष्णवानि । हे हविः ! त्वमग्नेस्तनूरसि अग्निसञ्ज्ञो यो देवः सोमस्य राज्ञो भृत्यस्तस्य गायत्रीच्छन्दोऽधिष्ठातुस्तनूः शरीरं भवसि तृप्तिजनकत्वात् तथाविध हे हविर्विष्णवे यज्ञव्यापिने सोमाय सोमप्रीत्यर्थं त्वा त्वां निर्वपामीति शेषः ॥ सोमस्य तनूरसि । सोमसञ्ज्ञः कश्चित्सोमस्य राज्ञो भृत्यस्त्रिष्टुप्छन्दोऽधिष्ठाता तस्य

तृप्तिहेतुत्वात्तनूरसि । अन्यत् पूर्ववत् । अतिथेरातिथ्यमसि । अतिथिसञ्ज्ञः सोमराजानुचरो जगतीच्छन्दोऽधिष्ठाता । हे हविः ! त्वमतिथेरतिथिसञ्ज्ञस्य सोमभृत्यस्य आतिथ्यमसि आतिथ्यनामकसंस्काररूपमसि । तिथिविशेषं विनैवातिक्षुधया पीडिते विप्रेऽतिथौ समागते तत्सत्काराय क्रियमाणः पादक्षालनभोजनसंवाहनादिसंस्कार आतिथ्यमुच्यते । अतिथेरिदमातिथ्यम् अतिथेर्ञ्य इति ( पा० ५, ४, २६ ) ञ्यप्रत्ययः । विष्णवे त्वां निर्वपामीति पूर्ववत् ॥ श्येनाय त्वा सोमभृते । श्येनो नाम देवः सोमराजानुचरः स्वर्गात्सोमाहर्ता श्येनरूपधारिगायत्र्यधिष्ठाता तस्मै श्येनाय विष्णवे सोमाय च त्वां निर्वपामि । किम्भूताय श्येनाय सोमभृते सोमं हरति आनयतीति सोमहृत्तस्मै । हृग्रहोर्भश्छन्दसीति हरतेर्हस्य भः । सोमानयनकर्त्रे । तथा च श्रुतिः ( ३, ४, १, १२ ) । सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरदिति ॥ अग्नये त्वा रायस्पोषदे । रायस्पोषं धनपुष्टिं ददाति रायस्पोषदाः तस्मै । क्विप्रत्ययः । राज्ञो धनं क्रयविक्रयादिना बहुधा पोषयित्वा राज्ञेऽर्पयति स रायस्पोषदा अग्निसञ्ज्ञोऽपरः सोमानुचरोऽस्ति अनुक्तच्छन्दोऽधिष्ठाता देवः तस्मै धनपुष्टिदायिनेऽग्नये हे हविः ! त्वा त्वां गृह्णामि विष्णवे त्वेति पूर्ववत् ॥ विष्णुशब्दाभिधेयस्य सोमस्य राज्ञो हविषा तदनुचराणामग्न्यादिदेवानां तद्द्वारा तत्सम्बन्धिनां गायत्र्यादिच्छन्दसां च तृप्तिर्भवति तदाह तित्तिरिः । यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनुचराणीति ॥ १ ॥

**अ॒ग्नेर्ज॒नित्र॑मसि । वृष॑णौ स्थः । उ॒र्व॒श्य॑सि । आ॒यु॒र॑सि । पु॒रू॒रवा॑ असि । गा॒य॒त्रेण॑ त्वा॒ छन्द॑सा मन्थामि । त्रैष्टु॑भेन त्वा॒ छन्द॑सा मन्थामि । जाग॑तेन त्वा॒ छन्द॑सा मन्थामि ॥ २ ॥**

आतिथ्येऽग्निमन्थनं शकलमादत्ते । "अग्नेर्जनित्रम्" । जायतेऽस्मिन्नग्निरिति जनित्रम् । दर्भतरुणके निदधाति । "वृषणौ स्थः" । वृष सेचने । वृषणौ वर्षितारौ सेक्तारौ भवथः । अ-

धरारणिं निदधाति । "उर्वश्यसि" । उत्तरारण्याज्यविलापनी-मुपस्पृशति । "आयुरसि" । उत्तरारणिं निदधाति । "पुरूरवा असि" । इतिहासपक्षेण मन्त्रत्रयं व्याख्यातं श्रुत्या । "उर्वशी वा अप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरिति" । मन्थति । "गायत्रेण त्वा" । हे अग्ने गायत्रेण त्वा छन्दसा मन्थामि जनयामि । उत्तरौ मन्त्रौ समानव्याख्यानौ । त्रैष्टुभेन जागतेनेति विशेषः ॥ २ ॥

अथाग्निनयनमन्त्राः का० ( ३, १, २८ ) अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोतीति ॥ शकलदैवतं यजुः । हे शकल ! त्वमग्नेर्जनित्रं जननाधारभूतमसि । जायतेऽस्मिन्निति जनित्रम् । का० ( ५, १, २९ ) वृषणाविति कुशतरुणे तस्मिन्निति । तस्मिन् शकले करोतीत्यर्थः । मन्त्रार्थस्तु । हे दर्भौ ! युवां वृषणौ सेक्तारौ स्थः भवथः । वर्षत इति वृषणौ । कनिन्प्रत्ययः । यथा पुत्रजननाय स्त्रीपुरुषौ वीर्यस्य सेक्तारौ तद्वद्युवामप्यरण्योरग्निजननसामर्थ्यसम्पादकावित्यर्थः ॥ का० [ ५, १, ३० ] उर्वश्यसीत्यधरारणिं तयोरिति । शकलस्थापितयोर्दर्भयोरधरारणिं निदध्यादिति सूत्रार्थः । हे अधरारणे ! त्वमुर्वशी असि । यथोर्वशी पुरूरवो नृपस्य भोगायाधस्ताच्छेते तद्वत्त्वमधोऽवस्थितासीत्यर्थः॥का० (५,१, ३१) आयुरसीत्युत्तरयाज्यस्थालीꣳसꣳस्पृश्येति । उत्तरारण्याज्यस्थालीं स्पृशेदिति सूत्रार्थः ॥ हे स्थालीगताज्य ! त्वमायुरसि अरणिद्वयेन जनिष्यमाणस्याग्नेरायुप्रदं भवसि । का० ( ५, १, ३२ ) पुरूरवा इत्यभिनिधानं तयोरिति । अधरारणेरभिमुखीमुत्तरारणिं निदध्यादिति सूत्रार्थः हे उत्तरारणे ! त्वं पुरूरवा असि यथा पुरूरवा नृप उर्वश्या अभिमुख उपरि वर्त्तते तथा त्वमपीत्यर्थः । उर्वशीत्यादिमन्त्रत्रयं श्रुत्या व्याख्यातम् ( ३, ४, १, २२ ) । उर्वशी वा अप्सरा. पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरिति ॥ का० ( ५, २, २ ) मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणमिति । मन्त्रत्रयेणारण्योर्मन्थनं कुर्य्यात् । हे अग्ने ! गायत्रेण छन्दसा गायत्रीच्छन्दोऽभिमानिना देवेनाहं त्वा त्वां मन्थामि अरण्योर्मन्थ-

नेनोत्पादयामि । एवमुत्तरावपि मन्त्रौ योज्यौ ॥ २ ॥

**भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥ ३ ॥**

प्रास्यति । "भवतं नः" पङ्क्तिः । आहवनीयनिर्मथ्यावुच्येते । भवतं युवां नः अस्माकं "समनसौ" समानमनस्कौ "सचेतसौ" समानप्रज्ञौ । "अरेपसौ" । रेप इति पापनाम । अपापौ "मा यज्ञं हिꣳसिष्टं" विनाशिष्टम् । "मा च यज्ञपतिं" यजमानम् । किञ्च "शिवौ" शान्तौ "भवतं भवथः "अद्य" अस्मिन्यज्ञे "नः" अस्माकम् ॥ ३ ॥

का० [ ५, २, ३, ] भवतं न इति प्रास्यतीति । मन्थनोत्थमग्निमाहवनीये प्रास्यतीत्यर्थः ॥ पङ्क्तिः । यस्याः अष्टार्णाः पञ्च पादाः सा पङ्क्तिः । अत्र तु तृतीयः षडक्षरः चतुर्थो दशार्णः । निर्मथ्याहवनीयावग्नी देवते । हे जातवेदसावुभावग्नी ! नोऽस्मदर्थे युवामीदृशौ भवतम् । किम्भूतौ युवाम् । समनसौ मनसा सहितौ । तथा सचेतसौ समानं चेतो ययोस्तौ परस्परं समानचित्तयुक्तौ । अन्यविषयं मनः परिहृत्यास्मदनुगृहाभिमुखत्वं समनस्त्वम् अनुग्रहे परस्परविप्रतिपत्तिराहित्यं सचेतस्त्वम् । तथा अरेपसौ पापरहितौ प्रमादादस्माभिः कृतेऽपि पापे कोपाभावः पापराहित्यम् । तदेव स्पष्टयति । यज्ञमस्मत्कर्म मा हिꣳसिष्टं मा विनाशयतं यज्ञपतिं यजमानं च मा हिꣳसिष्टम् । तथा अद्यास्मिन्ननुष्ठानदिने नोऽस्मदर्थे शिवौ शान्तौ कल्याणकारिणौ भवतं पूर्वोक्तविधिना ॥ ३ ॥

**अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन् स्वाहा ॥ ४ ॥**

जुहोति । "अग्नावग्निः" । आहवनीयनिर्मथ्यावुच्येते । वि-

राट्। अग्नौ आहवनीयाख्ये योऽयमग्निः निर्मथ्यः "चरति प्रविष्टः"। "ऋषीणां" विदुषामग्निहोत्रिणां पुत्रः। "स यदग्नी आधत्ते तदेतं जनयतीति" श्रुतिः। "अभिशस्तिपावा" अभिशंसनमभिशस्तिः अभिशस्तेः पाति गोपायति यः सोऽभिशस्तिपावा। "स नः" सोऽस्माकमग्निः "स्योनः" सुखरूपः। "सुयजा" सुयागेन। "यज"। परोक्षकृतत्वान्मन्त्रस्य प्रथमपुरुषेण व्यत्ययः। यजतु। "इह" अस्मिन् यज्ञे। "देवेभ्यो हव्यं" हविः। "सदम्" सदा। "अप्रयुच्छन्"। युच्छी प्रमादे। अप्रमाद्यन्। "स्वाहा" सुहुतं हविर्जुहोमि ॥ ४ ॥

का० [ ५, २, ६ ] अग्नावग्निरिति जुहोति स्थाल्याः स्रुचेति ॥ विराट्। दशाक्षरैश्चतुर्भिः पादैर्विराट्। अत्र त्रिर्शीगतुर्याविका दशार्णौ तनो ह्यधिका। अग्निर्मथ्यमानोऽग्नावाहवनीये प्रविष्टः सन् चरति हविर्भक्षयति। चर गतिभक्षणयोः। किम्भूतोऽग्निः ऋषीणां पुत्रः ऋत्विजो वेदविदः ऋषय तैरुत्पादितत्वात् तेषां पुत्रवत् पुत्रः। तथा अभिशस्तिपावा अभिशस्तिर्वैकल्यनिमित्तोऽभिशापस्तस्मात् पाति रक्षतीत्यभिशस्तिपावा। आतो मनिन्क्वनिब्वनिपश्चेति वनिप्प्रत्ययः। हे अग्ने! स तथाविधस्त्वं नोऽस्मदर्थं स्योनः सुखरूपः सन् सुयजा शोभनयागेन इहास्मिन् स्थाने देवेभ्यः इन्द्रादिभ्यः हव्यं सोमादिरूपं यज देहि अस्मद्दत्तं हविर्देवान् प्रापयेत्यर्थः। किं कुर्वन्। सदं अप्रयुच्छन् अप्रमाद्यन्। युच्छ प्रमादे। स्वाहा इदमाज्यं तुभ्यं हुतमस्तु। यद्वा सोऽग्निर्नो हविर्देवेभ्यो यज यजतु ददात्विति पुरुषव्यत्ययेन वा योजना ॥ ४ ॥

आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय। अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपगेषꣳ स्विते मा धाः ॥ ५ ॥

तनूनप्त्रमाज्यं गृह्णाति। "आपतये त्वा"। वायुदेवत्यं

यजुः । आ पततीत्यापतिः परि सर्वतः पततीति परिपतिः । उ-भयगुणविशिष्टाय वायवे हे आज्यं त्वा गृह्णामि । "तनून-प्त्रे" । तनूशब्देनात्रात्माभिप्रेतः । तन्यते हि तस्मादाकाशः त-तो वायुर्भवति । तस्मादाकाशो जायते शक्करनामा आका-शाद्वायुः । एतदभिप्रेत्योक्तम् । तनूनप्त्रे ब्रह्मणःपौत्रायेत्यर्थः । "शाक्कराय" । शक्नुवन्त्याकाशे भूतानि स्थातुमिति शक्कर आकाशस्तस्यापत्यं शाक्करो वायुस्तस्मै । "तस्माद्वा एतस्मादाकाशः सम्भूत आकाशाद्वायुरिति" श्रुतिः । "शक्-ने" । शक्लृ शक्तौ । 'अन्येऽपि दृश्यन्त' इति वनिप् । शक्ताय । "ओजिष्ठाय" बलिष्ठाय । आज्यमवमृशन्त्यृत्विजः परस्पर-मद्रोहाय शपथयन्तः । "अनाधृष्टमसि" । अनाधर्षितमनुल्ल-ङ्घितश्च त्वं भवसि । हे आज्य शपथकारिभिः पूर्वमधृष्टमि-दानीमप्यनाधृष्यमनुल्लङ्घनीयं त्वं भवसि । "अनभिशस्ति" । अभिपूर्वः शंसतिर्गर्हार्थे वर्त्तते । न विद्यते अभिशस्तिर्यस्य त-त्तथोक्तम् । "अभिशस्तिपाः" अभिशस्तेः पाति रक्षतीत्यभि-शस्तिपाः । अनभिशस्ते प्रदेशे स्वर्गादौ नयतीति "अनभिश-स्तेन्यम्" । यतस्त्वमित्थं भूतमतः त्वामभिमृश्य "अञ्जसा-सत्यमुपगेषम्" । अञ्जसा प्रगुणेन मार्गेण यथास्वरूपं सत्य-मुपगच्छेयम् । त्वं चानेन सत्येन "स्विते मा धाः" । सु इते सा-धु गते कल्याणे लोके स्वर्गे मां निदध्याः ॥ ५ ॥

का० ( ८, १, १९—२० ) । ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति त्रिश्च स्थाल्याः स्रुवेणेति । व्रतं प्रदीयते येन पात्रेण तत्र पात्रे ध्रुवास्थमाज्यं गृह्णीयादिति सूत्रार्थः । वायुदेवत्यं यजुः । आ सम-न्तात् पतति गच्छतीत्यापतिः सततगतिर्वायुस्तस्मै हे आज्य ! त्वां गृह्णामि । किम्भूताय । परिपतये परितः पततीति परिपति-स्तस्मै सर्वव्यापिने । तथा तनूनप्त्रे । तनोति विस्तारयति विश्व-

मिति तनूरात्मा तस्य नप्त्रे पौत्राय । शाकराय शक्नुवन्ति स्थातुं भूतानि यत्र स शक्वर आकाशस्तस्यापत्यं शाक्वरस्तस्मै । तस्मादे-तस्माद्वा आत्मन आकाशः सम्भूत अकाशाद्वायुरिति श्रुतेः ( तैत्ति० आरण्य० ८, १ ) तथा शक्वने । शक्नोति सर्वं कर्त्तुमिति शक्वा त-स्मै । अन्येभ्योऽपि दृश्यन्त इति वनिप् । ओजिष्ठाय । ओजो बल-मस्यास्तीत्योजस्वी । अस्मायामेधास्रजो विनिरिति विनिप्रत्ययः । अतिसयेनौजस्वी ओजिष्ठस्तस्मै । अतिशायने तमबिष्ठनाविति इष्ठनि प्रत्यये विन्मतोर्लुगिति विनो लोपे टिलोपः ॥ यद्वास्य म-न्त्रस्यार्थान्तरं तित्तिरिव्याख्यातम् । हे आज्य ! त्वामापतये प्राण-देवताप्रीतये गृह्णाम्यत्र पात्रे स्वीकरोमि । आ समन्तात् पाति दे-हं रक्षतीत्यापतिः प्राणः । तदाह तित्तिरिः । प्राणो वा आपतिः प्राणमेव प्रीणातीति ॥ इष्टप्राप्त्युपायमनिष्टपरिहारोपायञ्च चिन्त-यित्वा परितः पाति पालयति परिपतिर्मनस्तत्प्रीत्यै गृह्णामि । त-दाह तित्तिरिः । मनो वै परिपतिर्मन एव प्रीणातीति ॥ तनूनप्त्रे । त नू शरीरं न पातयति न विनाशयतीति तनूनपा जाठरोऽग्निस्त-स्मै जाठराग्निदेवताप्रीत्यै आज्य ! त्वां गृह्णामि ॥ शाक्वराय । शक-नशीलः शक्वरः शक्तिमान् पुरुषस्तस्येदं शाक्वरं शक्तिस्वरूप तस्मै-शक्तिस्वरूपाभिमानिदेवताप्रीत्यै त्वां गृह्णामि ॥ शक्वने ओजिष्ठा-य । शक्वने इति चतुर्थी सप्तम्यर्थे । शक्वनि शक्तिमति पुरुषे यदो-जिष्ठ सारं तस्मै । ओजो नामाष्टमो धातुस्तत्सारमोजिष्ठं तद्वष्ट-म्भेनैव शरीरे शक्तिरवतिष्ठते । ओजःसाराभिमानिदेवताप्रीत्य त्वां गृह्णामीत्यर्थः ॥ का० ( ८, १, २४—२६ ) तनूनप्त्रमंतद्दक्षिण-स्यां वेदिश्रोणौ निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्टमित्यै द्रोहस्तेभ्य इति । आज्यदैवतं यजुः । हे आज्य ! त्वमीदृशमसि । किम्भूतम् । अनाधृष्टमितः पूर्वं केनाप्यतिरस्कृतम् ॥ अनाधृष्यं न आधर्षितुं शक्यमितः परमप्यतिरस्कार्य्यम ॥ देवानामग्न्यादी-नामोजः सारभूतम् ॥ अनभिशस्ति अभिशस्तिर्निन्दा यस्य तत् अभिपूर्वः शंसतिर्गर्हायां वर्त्तते ॥ अभिशस्तिपाः अभिशस्तिरृ-त्विजां परस्परविरोधेन निन्दन तस्याः पाति रक्षतीत्यभिशस्तिपाः । पुंस्त्वं छान्दसम् ॥ अनभिशस्तेन्यम् अनभिशस्ते अनिन्दिते स्वर्गा-दौ नयतीत्यनभिशस्तेनीः । द्वितीया प्रथमार्थे । पुंस्त्वं व्यत्ययेन ॥

यतस्त्वमीदृशमसि अतो हे तनूनपत्राज्याहमृत्विक् अञ्जसा ऋजु-मार्गेण मानसकौटिल्यरहितेन सत्यमाज्यस्पर्शरूपं शपथमुपगेषमु-पगच्छेयम् । उपपूर्वस्य गायतेर्लेटयुत्तमैकवचने सिब्बहुलं लेटी-ति सिपि इडागमे लेटोऽडाटावित्यडागमे च रूपम् इतश्च लोप परस्मैपदेष्विति इलोपः । किञ्च हे आज्य ! स्विते शोभनमार्गे य-ज्ञकर्मणि मा मां त्व धाः धेहि स्थापय । दधातेर्लुङि मध्यमैक-वचनेऽडभावे रूपम् ॥ ५ ॥

अग्ने॑ व्रतपास्त्वे व्र॑तपा या तव॑ त॒नूरि॒यꣳ सा मयि॑ यो मम॑ त॒नूरे॒षा सा त्वयि॑ स॒ह नौ॑ व्रतपते व्र॒तान्यनु॑ मे दी॒क्षां दी॒क्षाप॑ति॒र्मन्य॑ता॒मनु॒ तप॒स्तप॑स्पतिः ॥ ६ ॥

आहवनीये समिधमादधाति । "अग्ने व्रतपाः" । यजमा-नोऽनेन यजुषा अग्निशरीरात्मशरीरयोः व्यत्यासङ्करोति । "हे अग्ने व्रतपाः" । हे अग्ने व्रतं पातिरक्षतीति व्रतपाः । व्रत-मिति कर्मनाम । "त्वे व्रतपाः" अवधारणार्थं पुनः सम्बोधय-ति । त्वमेव व्रतस्य गोपायिता । तं शरणं व्रजाम इति शेषः । केन प्रकारेणेति चेत् । "या तव तनूरियꣳसा मयि" । या इयं तव तनूः सा मयि भवत्विति शेषः । "या मम तनूरेषा सा-त्वयि" । या चैषा मम तनूः सा त्वयि भवत्विति शेषः । एवं कृतशरीरव्यत्ययपोरावयोः "सह नौ व्रतपते व्रतानि" । एक-त्र आवयोः हे व्रतपते व्रतानि कर्माणि सन्त्विति शेषः । किञ्च "अनु मे दीक्षां दीक्षापतिर्मन्यताम्" । अनुमन्यतां मे मम दी-क्षां दीक्षापतिः सोमः । अनुतपस्तपस्पतिः । अनुमन्यतां च तपः शब्देन च उपसद उच्यन्ते । तपस्पतिः सोमः ॥ ६ ॥

का० ( ८, २, ४ ) अग्ने व्रतपा इत्याहवनीये समिधमाधायेति ॥ आग्नेयं यजुः । यजमानोऽनेन यजुषाग्निशरीरात्मशरीरयोर्व्यत्ययं करोति । हे व्रतपाः ! सर्वेषां व्रतानां पालकाग्ने ! त्वे व्रतपाः त्व

मस्मदीयस्य वर्त्तमानव्रतस्य पालको भवसीति शेषः । विभक्तेः शे आदेशे त्वे इति रूपम् । तव तथाविधस्य व्रतपालकस्य या तनूः शरीरमस्ति सेयं तनूर्मयि भवत्विति शेषः । यो या उ या च मम तनू मदीयं शरीरं सैषा तनूस्त्वयि भवतु । तथा सति हे व्रतप ते ! व्रतपालकाग्ने ! व्रतान्यनुष्ठेयानि कर्माणि नौ अग्नियजमानयोः सह प्रवर्त्तन्तामिति शेषः । यावान् व्रतेषु ममादरस्तावानेव तवापि भवत्वित्यर्थः । किञ्च । दीक्षापतिर्दीक्षायाः पालकः सोमो मे मम दीक्षामनुमन्यताम् । तथा तपस्पतिः उपसद्रूपस्य तपसः पालकः सोमः तपः मदीयमुपसद्रूपमनुमन्यतामित्यनुवर्त्तते ॥ ६ ॥

अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे । आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व । आप्याययास्मान् सर्व्वान् सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय ॥ एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम् ॥ ७ ॥

सोममाप्याययन्ति । "अꣳशुरꣳशुः" । चतुरवसाना चतुरशीत्यक्षरा प्रकृतिरुच्यते सौमी । चतुर्थोऽर्धर्चो लिङ्गोक्तदेवताकः । हे सोम "अंशुः" । वीप्सा । "ते" तव "आप्यायताम्" उपचीयताम् । कस्मै "इन्द्राय"। तादर्थ्ये चतुर्थी । "एकधनविदे" । एकधनान् वेत्ति एकधनवित् तस्मै एकधनविदे कथंभूतान् वेत्ति । "एकैकोऽशुः सोमस्य देवान् प्रति भक्षत्वेन गच्छन् शतमेकधनानाप्याययति दश दश वा सोमस्य ईदृशी-शक्ति" रिति श्रुतिः" । "आ तुभ्यमिन्द्रः प्यायताम्" । आप्यायतामुपचीयताम् इन्द्रः हे सोम तुभ्यं त्वदर्थम् । उपचितोऽहीन्द्रो बहु सोमं पिबति । "आत्वमिन्द्राय प्यायस्व" । आप्यायस्व त्वमिन्द्रार्थमात्मानम् । सोम "आप्यायय" वर्द्धय "अस्मान सर्वान्" समानख्यानान परिचारकान् । "सन्या"

धनलोभेन "मेधया" प्रज्ञया च । "स्वस्ति ते देव सोम" । स्वस्ति अविनाशः अस्तु तव हे देव सोम । अहं च "सुत्यामशीय" व्याप्नुयाम् । यद्वा स्वस्त्यविनाशेन तव संबन्धि सवनं सुत्यां हे देव सोम अहं व्याप्नुयाम् । प्रस्तरे निह्नुवते । "एष्टा रायः" । यजतेः कृतसंप्रसारणस्यैतद्रूपं निष्ठाप्रत्यये परतो दानार्थस्य । आ ईष्टा रायः मर्यादया इष्टानि धनानि । दक्षिणाभिप्रायमेतत् । किमर्थमिति चेत् "प्रेषे भगाय" । प्रकृष्टाय इषेऽन्नाद्याय भगाय धनाय च । "ऋतमृतवादिभ्यः" सत्यमेतच्चिन्तितमस्माकं भूयात्सत्यवादिनामिति विभक्तिव्यत्ययः षष्ठ्यर्थे चतुर्थी । "नमो द्यावापृथिवीभ्याम्" । द्यावापृथिव्योः सम्भोगमनुसर्वं सिध्यतीति नमस्कारः ॥ ७ ॥

का० ( ८, २, ६ ) यजमानषष्ठाः सोममाप्याययन्त्यꣳशुरꣳशुरिति ॥ प्रकृतिः चतुरवसाना सोमदेवत्या । अन्त्योऽर्धर्चो लिङ्गोक्तदैवतः । चतुरशीत्यक्षरा प्रकृतिः । तत्र मन्त्रद्वयम् ॥ सोमवल्ल्या अवयवोऽंशुरुच्यते । वीप्सा सर्वसंग्रहार्था ! हे सोम देव ! ते तवांशुरंशुः सर्वोऽप्यवयव इन्द्राय इन्द्रप्रीत्यर्थमाप्यायतां वर्धतां चिरावस्थानेन यः सोमावयवो म्लानः शुष्कश्च तदुभय मन्त्रेणाप्यायित भवति । तदाह तित्तिरिः । यद्देवस्य शुष्यति यन्म्लायते तदेवास्यैतेनाप्याययतीति ॥ किम्भूतायेन्द्राय । एकधनाविदे एकं मुख्यं धनंसोमरूपं विन्दते लभते स एकधनवित् यद्वा सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधना एकं धनं सोमरूपं यत्रेति तान् वेत्ति जानातीति सोमकण्डनाय जलकुम्भा आनीता इति जानातीत्यर्थः ॥ किञ्च हे सोम ! तुभ्यं त्वत्पानार्थमिन्द्र आप्यायतां वर्धताम् तथा हे सोम ! त्वमपि इन्द्रायेन्द्रपानायाप्यायस्व सर्वतो वृद्धो भव । अनेनोभयोरपि वृद्धिर्भवति । तदाह तित्तिरिः । उभावेवेन्द्रञ्च सोमं चाप्याययतीति ॥ किञ्च हे सोम ! सखीन् सखिवत्प्रीतिविषयानस्मानृत्विजः सन्या मेधया चाप्यायय प्रवर्धय । सनिर्धनदानं मेधार्थधारणशक्ति । ऋत्विजो वा अस्य

सखाय इत्युक्तेः सखिशब्देन ऋत्विजः । किञ्च हे सोम देव ! ते तव स्वस्ति क्षेमोऽस्तु तव प्रसादादहं सुत्यां सोमाभिषवक्रियां समाप्तिदिनमशीय प्राप्नुयाम ॥ का० ( ८, २, ९ ) प्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति । सर्वेऽपि ऋत्विज. प्रस्तरे निजहस्तानुत्तानान् कृत्वा दक्षिणहस्तं चोत्तानमुपर्यवस्थाप्य निह्नुवते सोमं परिचरन्तीति सूत्रार्थः ॥ रायो धनानि एष्टाः आ समन्तादिष्टा अस्माकमपेक्षिताः । सोम ! त्वत्प्रसादादस्माकं रायः सन्त्विति भावः ॥ यद्वा रायः दक्षिणालक्षणा एष्टाः आ समन्तादृत्ताः यजते रूपम् दक्षिणा दास्यन्त इति भावः । किमर्थं प्रेषे भगाय । प्रकर्षेणेष्यत इति प्रेट् । तस्मै प्रेष्यमाणाय भगायैश्वर्याय ॥ यद्वा प्रकर्षेण इषे अन्नाय भगाय च ॥ किञ्च ऋतवादिभ्योऽग्निहोत्रिभ्यः ऋतमवश्यम्भाविफलोपेतं कर्म सम्पादयेति शेष. । ऋतं सत्यं वदन्तीति ऋतवादिन ॥ यद्वा षष्ठ्यर्थे चतुर्थी ऋतवादिनामस्माकमृतं कर्मफलमस्त्विति शेषः ॥ द्यावापृथिवीभ्यां तदभिमानिदेवताभ्यां नमोऽस्तु । तयोरनुग्रहेण यजमानायाविघ्नास्थितिर्भवतीति नमस्क्रियते । तदाह तित्तिरिः । द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिन् लोके प्रतितिष्ठतीति ॥ ७ ॥

या ते॑ अग्नेऽयःश॒या त॒नूर्वर्षि॑ष्ठा गह्व॒रे॒ष्ठा । उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त् स्वाहा॑ । या ते॑ अग्ने रजःश॒या त॒नूर्वर्षि॑ष्ठा गह्व॒रे॒ष्ठा उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त् स्वाहा॑ । या ते॑ अग्ने हरिश॒या त॒नूर्वर्षि॑ष्ठा गह्व॒रे॒ष्ठा उ॒ग्रं वचो॒ अपा॑वधीत्त्वे॒षं वचो॒ अपा॑वधी॒त् स्वाहा॑ ॥ ८ ॥

उपसदं जुहोति । "ततोऽसुरा एषु लोकेषु, पुरश्चक्रिरे अयस्मयीमेवास्मिल्लोके रजतामन्तरिक्षे हारिणीं दिवीत्यादी"तिहासो निदानभूतः । "या ते अग्ने" । हे अग्ने या ते तव "अयःशया" अयसि शेते इत्ययःशया "तनूः" शरीरम् "वर्षिष्ठा उरुतमा" विस्तीर्णतमा । "गह्वरेष्ठा" निगूढदेशस्थायि-

नी । सा असुरसम्बन्धिनी । "उग्रं वचः" उद्गूर्णं वचः जहि-जहि मारयमारय इतीत्थंभूतं वचनम् "अपावधीत्" अपहन्तु "त्वेषं" दीप्तं धृष्टं बलेन उर्जस्वितया च युक्तमपहन्तु । हतत्वर्वोयमा निर्वाचः असुराः सन्त्वित्यर्थः । यद्वा या तवाग्नेऽयःशया तनूः विस्तीर्णा निगूढदेशस्थायिनी च उद्गूर्णमसह्यं वचनमपहतवती दीप्तं वचनमपहतवती । सेनां पुनरपहन्त्विति शेषः । "रजःशया" रजतशायिनी । "हरिशया" हरितसुवर्णशायिनी । एतावदुत्तरयोर्मन्त्रयोर्विशेषव्याख्यानम् ॥ ८ ॥

का० ( ८, २, ३५ ) उपसद जुहोति स्रुवेण या त इति ॥ आग्नेयानि त्रीणि यजूंषि । अत्रेयमाख्यायिका अस्ति । देवैः पराजिता असुरास्तपस्तप्त्वा त्रैलोक्ये त्रीणि पुराणि चक्रुर्लोहमयीं भूमौ राजतीमन्तरिक्षे हैमीं दिवि । तदा देवैस्ता दग्धुमुपसदाग्निराराधितस्तत उपसद्देवतारूपोऽग्निर्यदा तासु पूर्षु प्रविश्य ता ददाह तदा तिस्रः पुरोऽग्नेस्तनवोऽभूवन् । तदभिप्रेत्याय मन्त्रः ॥ हे अग्ने ! या ते तवायःशया तनूः । अयसि शेते इत्ययःशया लोहमयीत्यर्थः । लोहमयपुरव्यापित्वेन तद्रूपा सती ॥ वर्षिष्ठा देवानामतिशयेनाभिमतफलवर्षिणी ॥ तथा गह्वरेष्ठा गह्वरे असुराणां विषमे देशे तिष्ठतीति गह्वरेष्ठा । हलदन्तात्सप्तम्याः सञ्ज्ञायामिति विभक्तेरलुक् ॥ सा ते तनूरुग्रं वचोऽपावधीत् ! छिन्धि भिन्धीत्यादिकमसुरप्रोक्त तीव्रं वचनं विनाशितवती ॥ तथा त्वेषं वचः असुरोक्त देवाधिक्षेपरूपं प्रदीप्तं वाक्यमपावधीत् ॥ स्वाहा तथाविधोपकाराय तुभ्यमग्नये हविर्दत्तम् । ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिन् लोके राजतीमन्तरिक्षे हारिणीं दिवीत्यादिश्रुत्या ( ३, ४, ४, ३ ) अयमितिहासो निरूपितः ॥ उग्रत्वेषवचसोरर्थान्तरम् । यथा असुरैः पराजिता देवा अन्नपाने अलभमानाः क्षुत्पिपासाभ्यां वय पीडिता इति यदूचुस्तदुग्रं वचः । तथा किं वा वीरहत्यादि महापातकमस्माभिः कृतमिति क्लिश्यन्तो यद्वाक्यं सन्तापहेतुत्वेन दीप्तमूचुस्तत्त्वेषं वचः । तदाह तित्तिरिः । अशनायापिपासे ह वा उग्रं वच एनश्च वै वीरहत्यञ्च त्वे-

यं बच इति ॥ का० ( ८, २, ३८ ) एवमितरे अन्वहं रजः शया-ं हरिशयां चेति । यथा प्रथमदिने या ते अग्नेऽयःशयेत्युपसदेव-मितरे द्वितीयतृतीये उपसदौ द्वितीयतृतीयदिनयोरनुतिष्ठेत् । द्वितीयस्यामुपसदि रजःशयेति तृतीयोपसदि हरिशयेति मन्त्र भेद इति सूत्रार्थः ॥ रजःशया रजतमयी । हरिशया हिरण्मयी । अन्यत् पूर्ववत् ॥ ८ ॥

तप्तायनी मेऽसि । वित्तायनी मेऽसि । अवतान्मा नाथितात् । अवतान्मा व्यथितात् । विदेदग्निर्नभो नाम । अग्ने अङ्गिर आयुना नाम्नेहि । योऽस्यां पृथि-व्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे । विदेदग्निर्नभो नाम । अग्ने अङ्गिर आयुना नाम्ने हि । यो द्वितीयस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वादधे । विदेदग्निर्नभो नाम । अग्ने अङ्गिर आयुना नाम्नेहि । यस्तृतीयस्यां पृथिव्यामसि यत्तेनाधृष्टं नाम यज्ञियं तेन त्वादधे । अनु त्वा देववीतये ॥ ९ ॥

चात्वालं परिलिखति । "तप्तायनी मेऽसि"। चत्वारो मन्त्राः पृथिवीदेवत्याः । तप्त इव वृत्त्यर्थं पुरुषोऽस्यामेतीति तप्तायनी पृथिवी । "मे" मम "असि"। द्वितीयं परिलिखति । "वित्ता-यनी" । अस्यां हि विविदानोऽर्थमुपलभमानः पुरुष एतीति वित्तायनी । वित्तवान्वा भवतीति वित्तायनी "मे" मम "अ-सि" । तृतीयं परिलिखति । "अवतात् मा नाथितात्" । अवतु रक्षतु मां नाथितात् । नाथतिर्याच्ञार्थः । परियाचनात्। यथाहं न याचेयं तथा पृथिवी मां करोत्वित्यर्थः । चतुर्थम् । " अवतात्" अवतु रक्षतु मां "व्यथितात्" व्यथ दुःखभयच-लनयोः । भयात् चलनाद्वा पृथिवी । चात्वाले प्रहरन्ति । "वि-देदग्निः" । "स वा अग्नीनामेव नामानि गृह्णन्हरति । यां त्वा

अमूं देवा अग्ने अग्नीन् होत्राय प्रवृणतेत्यादी"तिहासः तदनुवादिन एते मन्त्राः । "विदेत्" जानीयात् अग्निः । कतमः । "नभः" । न भातीति नभःस्वकीयं नाम । पुरीषं हरति । "अग्ने अङ्गिरः" । हे अग्ने अङ्गिरः । "अङ्गिरा उ ह्यग्निरिति" श्रुतिः । "आयुना नाम्ने" । आयुरित्यनेन नाम्ना अभिहितः । "आ इहि" आगच्छ । निवपति । "योऽस्यां पृथिव्याम्" । यस्त्वमस्यां पृथिव्यां भवासि । यत्ते तव आनाधृष्टम्" अनाधर्षितं नाम "यज्ञियं" यज्ञसम्पादि तेन नाम्ना "त्वामादधे" स्थापयामि । "यो द्वितीयस्यां "पृथिव्यामसि" । पृथिवीशब्देनान्तरिक्षलोक उक्तः । तृतीयस्यां "पृथिव्यामसि" । पृथिवीशब्देन द्युलोक उक्तः । चतुर्थं प्रहरति । "अनु त्वा देववीतये" । देवतर्पणाय अनुहरामि त्वां देववीतये । वीतिस्तर्पणार्थः ॥ ९ ॥

का० ( ५, ३, २०—२५ ) शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं सञ्चरं परिहाप्य शम्यामुदीचीं निदधाति पुरस्ताच्च दक्षिणतः प्राचीमुत्तरतश्च स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रमिति । उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृद खनति स प्रदेशश्चात्वाल उच्यते । तत्रोत्करात् पूर्वस्यां सञ्चरपरिहारेणोदगग्रां शम्यां निधाय तत्प्रमाणां तत्पूर्वपार्श्वे स्फ्येन रेखां कुर्यात् तथा तत्पूर्वपार्श्वे तथैव शम्यां निधाय रेखां कुर्यात् अभ्यन्तरे एव दक्षिणोत्तरयोरपि प्रागग्रां शम्यां निधाय रेखाद्वयं कुर्यादिति सूत्रार्थः ॥ अस्यां कण्डिकायां चतुर्दश यजूंषि । तत्राद्यानि चत्वारि पृथिवीदेवत्यानि ॥ अत्र प्रथमं परिलिखति । हे पृथिवि ! त्वं मे ममानुग्रहार्थं तप्तायनी असि । तप्त पुरुषमयति प्राप्नोतीति तप्तायनी । यो हि दरिद्रः क्षेत्ररहितोऽहमिति सन्तप्यते त तापोपशान्त्यर्थं प्राप्नोषीत्यर्थः । यद्वा तप्त सन्नरो यस्यामयति सा तप्तायनी ममासि ॥ द्वितीयं लिखति । वित्तार्थं नरो यस्यामेतीति वित्तायनी । यद्वा वित्तार्थं निर्धनं पुरुषमयतीति वित्तायनी । पृथिव्यां हि प्राप्तायां सस्यनिष्पत्तिद्वारा महद्धनं लभते ॥ तृतीयं परिलिखति ।

हे पृथिवि ! नाथितात् याचितात् मा मां त्वम् अवतात् रक्ष । तु-ह्योस्तातङ्ङिति हेस्तातङ्ङादेशः । यथा कमपि न याचे तथा मां कुर्वित्यर्थः । नाथतिधातुर्याच्ञार्थः ॥ चतुर्थं परिलिखति । व्य-थ भयचलनयोः । व्यथितात् भयाच्चलनात् स्थानभ्रंशाच्च मा माम-वतात् रक्ष ॥ का० ( ५, ३, २६ ) विदेदग्निरिति चात्वले प्रहरति स्फ्येनेति । प्रहरति मृत्तिकां खनेदित्यर्थः ॥ आग्नेयं यजुः । हे चा-त्वालगतमृत्तिके नभो नामाग्निर्नभःसञ्ज्ञस्त्वदधिष्ठाताग्निर्विदे-त् त्वां जानीयात् । मया खन्यमानां त्वां त्वदधिष्ठातानुजानात्वित्य-र्थः । अग्निनामोच्चारणपुरः सरं प्रहरेत् । तथा च श्रुतिः ( ३, ५, १, ३१ ) । स वा अग्नेर्नामेव नामानि गृह्णन् हरतीति ॥ का० ( ५, ३, २७ ) अग्ने अङ्गिर इति पुरीषं प्रहरतीति ! पुरीषं खाता मृत् ॥ हे अङ्गिरः ! अङ्गिर्गतिरस्यास्तीति अङ्गिराः । मत्वर्थे रस्प्रत्ययः । त त्सम्बोधनम् । हे अग्ने ! त्वमायुना नाम्नाभिहितः सन् एहि ग-च्छ । एति गच्छतीत्यायुरग्नेर्नाम । अधिष्ठातर्यागत एवाधिष्ठेयमा-गच्छतीत्यग्नेरागमनादिकं प्रार्थ्यते ॥ का० ( ३, ५, २८ ) योऽस्या मिति निवपति पूर्वार्धे शङ्कुसहितमिति । उत्तरवेदिस्थाने मृदं निक्षिपेदित्यर्थः । हे अग्ने ! यस्त्वमस्यां दृश्यमानायां पृथिव्यां भू-मावसि । किञ्च ते तव यज्ञियं यज्ञयोग्यं यत् नामाग्निरिति प्रसि-द्धमनाधृष्यं केनापि याज्ञिकेनातिरस्कृतं तेन त्वादधे तेन नाम्ना युक्तं त्वां स्थापयामि ॥ का० ( ५, ३, ३०—३१ ) एवं द्विरपरं द्वि-तीयस्यां तृतीयस्यामिति विशेष इति । यथा पूर्वैस्त्रिभिर्मन्त्रैः खा-त्वा हृत्वा मृत् प्रक्षिप्ता वेद्यर्थमेतत्त्रितयं पुनरपि द्विः कुर्य्यादिति मन्त्रयोः तत्रास्यामिति पदस्थाने द्वितीयस्यां तृतीयस्यामिति पा-ठविशेष इति सूत्रार्थः ॥ यद्यपि पृथिवीशब्देन भूमिरेव तथापि द्वितीयस्यामिति तृतीयस्यामिति विशेषणत्वाद् द्वितीया पृथिव्य-न्तरिक्षं तृतीया पृथिवी द्यौः अन्यत् पूर्ववत् व्याख्येयम् ॥ का० ( ५, ३, ३२ ) अनु त्वेति चतुर्थं यथार्थमाहृत्येति । यथा पूर्वस्मिन् प-र्यायत्रये मृदाहृत्य प्रक्षिप्ता एवं चतुर्थमपि प्रक्षेपणपर्यन्तं मृदाहर णं कुर्य्यादिति सूत्रार्थः ॥ देववीतये देवानां प्रीतये हे मृत्तिके ! त्वा त्वामनु पूर्वोक्तमाहरणत्रयमनुसृत्याहरामीति शेषः ॥ ९ ॥

सि॒ꣳह्य॑सि सपत्नसा॒ही दे॒वेभ्यः॑ कल्पस्व । सि॒ꣳह्य-

